THE

# KASHI·SANSKRIT·SERIES

## NO. 93.

( Karmakāuda Section, No. 7 )

# आपस्तम्बधर्मसूत्रम्

श्रीमद्धरदत्तमिश्रविरचितया

उज्ज्वलाख्यया वृत्त्या संवलितम् ।



PRINTED, PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*

1932.

THE

# KASHI SANSKRIT SERIES

( *HARIDÂS SANSKRIT GRANTHAMĀLĀ* )

## NO. 93.

( Karmakānda Section No 7. )

# ĀPASTAMBA DHARMASŪTRA

## WITH THE COMMENTARY UJJWALA

By

**S'RI HARADATTA MIS'RA**

*Edited with*—

Notes, Introduction Word Index, Etc.,

by

VĒDAVISĀRADA, MĪMĀṂSĀKĒSARĪ,

PANDIT. A. CHINNASWĀMĪ S'ĀSTRĪ

Professor, Benares Hindu University.

and

MĪMĀṂSĀSIROMANI

*Pandit. A. Ramanatha S'astri*

Mīmāmsādhyāpaka Sanskrit College, Tirupati.

(126)

PRINTED—PUBLISHED & SOLD BY

JAI KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*

1932.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः
६३
कर्मकाण्डविभागे (७) सप्तमं पुष्पम् ।

# आपस्तम्बधर्मसूत्रम् ॥

श्रीमद्धरदत्तमिश्रविरचितया
उज्ज्वलाख्यया वृत्त्या संवलितम् ।

श्रीकाशीहिन्दूविश्वविद्यालयप्रधानमीमांसाध्यापकेन
"वेदविशारदेन, मीमांसाकेसरिणा"
पण्डितप्रवरेण श्रीचिन्नस्वामिशास्त्रिणा

श्रीपद्मपुरीविराजमानश्रीवेङ्कटेश संस्कृतमहाविद्यालये पूर्वमीमांसाध्यापकेन,
मीमांसाशिरोमणिना पं० अ. रामनाथशास्त्रिणा च
टिप्पण्यादिभिस्संयोज्य संशोधितम् ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा-संस्कृत-सीरिज़ आफिस,
बनारस सिटी ।

सं० १९८९

श्रीगणेशाय नमः ॥

# भूमिका ॥

इदमिदानीं श्रीमदापस्तम्बमहर्षिप्रणीतं धर्मसूत्रं श्रीमिश्रहरदत्तप्रणीतया उज्वलाख्यया वृत्त्या समुज्वलितं मुद्रयित्वा प्रकाशं प्रापय्य प्रेक्षावतां चक्षुर्गोचरतामापाद्यते । ग्रन्थोऽयं बहुत्र बहुधा मुद्रितोऽपि एतर्हि दौर्लभ्यमेवाऽऽसाद्य एतदधीतिबोधाचरणप्रचारकाणां छात्राणामध्यापयितॄणां च कामपि कष्टामेव दशामापादयन्नवर्तत । तदिदं दुःखं दूरीकर्तुकामेन चौखम्बासंस्कृतपुस्तकालयाधिपतिना सुरभारतीसेवैनकफलमात्मजीवितमापादयता श्रेष्ठिवर्येण श्रीजयकृष्णदासगुप्तमहोदयेन ग्रन्थस्याऽस्य पुनस्संस्करणे कृतमतीभूय एतत्संशोधनार्थमावामभ्यर्थितौ । आवाभ्यामपि तच्चिन्तितं साधु मन्वानाभ्यां कार्यमेतत्स्वीकृत्य, अध्ययनाध्यापनाद्यवशिष्टेऽल्पीयसि काले यथामति परिशोध्य प्रकाशं नीतोऽयं ग्रन्थः ।

एतद्ग्रन्थसंशोधनार्थं अधोङ्कितान्यादर्शपुस्तकानि समुपयोजितानि—

( १ ) कुम्भघोणे नागराक्षरेषु मुद्रितं मदीयं पुस्तकमेकम् ।

( २ ) मुम्बय्यां Dr. बूलर् महाशयेन मुद्रितं विश्वविद्यालयीयं पुस्तकं द्वितीयम् ।

( ३ ) अस्मन्मातुलगृहादानीतं ग्रन्थाक्षरैस्तालपत्रेषु लिखितं तृतीयम् ।

( ४ ) पण्डितप्रवरश्रीविद्याधरशर्ममहोदयानां हस्तलिखितं पुस्तकं चतुर्थम् ।

( ५ ) मैसूरपुरे देवनागराक्षरेषु मुद्रितं सरस्वतीभवनाल्लब्धं पुस्तकं पञ्चमम् ।

( ६ ) महीशूरपुर एव तैलङ्गाक्षरेषु मुद्रितं षष्ठम् ।

( ७ ) दक्षिणदेशस्थसुन्दरगिरि समाख्यग्राम ( नल्लूर् ) वास्तव्यानां श्रीमतां पं० कल्याणसुन्दरशास्त्रिणां ग्रन्थाक्षरैस्तालपत्रेषु लिखितं सप्तमम् ।

( ८ ) श्रीमतामाचार्यध्रुवमहोदयानां पुस्तकमांग्लभाषानुवादरूपमष्टमम् ।

एतत्पुस्तकाष्टकमवलम्ब्य संशोध्य मुद्रितमपीदं पुस्तकमन्ततः पुरुषस्वभावसुलभया कयाचिदशुद्धिसन्तत्याऽपरित्यक्तमेव वर्वर्तीति तदपनुत्तयेऽशुद्धसंशोधनं ग्रन्थान्ते सन्नियोजितम् । प्रथमप्रश्नीयस्याऽष्टमपटलात्मकस्याऽध्यात्मपटलस्याऽपरा काचिद्व्याख्या श्रीमच्छङ्करभगवत्पादाचार्यप्रणीता अनन्तशयनग्रन्थमालायां पूर्वं मुद्रिताऽपि अध्येतृसौकर्यार्थमत्रैवोज्वलया साकं पुनर्मुद्रिता । यद्यपि व्याख्याया अस्याः शङ्करभगवत्पादीयत्वेऽत्रैव तथोल्लेखनमृते नाऽन्यत्किञ्चन प्रमाणमुपलभ्यते, नाऽपि तदीयव्याख्याशैल्याऽन्यत्र स्थितया सहेयं संवदति, तथाऽपि यावत्तदनुरोधि विरोधि वा प्रमाणमुपलभामहे तावदस्मिन्विषये जोषंभावमेव शरणं समुचितं मन्वानौ तूष्णीमास्वहे ।

सूत्रप्रणेतुः श्रीमदापस्तम्बमहर्षेः श्रीमिश्रहरदत्ताचार्यस्य चेतिवृत्तविषये यदुक्तमस्माभिरापस्तम्बगृह्यसूत्रभूमिकायां, न ततोऽधिकं विशेषं वक्तुं पार्यतेऽस्मद्धस्तगतामैतिहासिकसामग्रीमवलम्ब्य, परन्तु—हरदत्ताचार्याः मद्रदेशान्तर्गतचोलदेशनिवासिनः द्राविडभाषाभाषिणश्चेत्यवगम्यते तदीयैरेव वचनैः । ते हि—'यथावर्षं प्रजा दानं दूरेदर्शनं मनोजवता' ( आप. धर्म. २-२३--७ ) इति सूत्रव्याख्यानावसरे दूरदर्शनोदाहरणार्थं यस्य कस्यचिद्देशस्योपादाने प्रसक्ते, 'चोलेष्ववस्थितास्तदैव हिमवन्तं दिदृक्षेरन्' इति चोलदेशमेवोपाददते । एवं 'स्त्रीभ्यस्सर्ववर्णेभ्यः' ( आप. धर्म. २-२९-१६ ) इति सूत्रे 'द्राविडाः कन्याः मेषस्थे सवितर्यादित्यपूजामाचरन्ती'ति द्राविडाचारमेव प्रमाणयन्ति । एवमेव गौतमधर्मसूत्रव्याख्यायां मिताक्षरायामपि(१) 'बालदेशान्तरितप्रव्रजितानामसपिण्डानां सद्यश्शौचम्' ( गौ. ध. १४--४४ ) इत्याशौचप्रकरणस्थं सूत्रं व्याचक्षाणाः 'अनुष्ठानमपि चोलदेशे प्रायेणैवम्'(२) इति चोलदेशाचारमेव प्रमाणयन्ति । एवं तत्रैव 'मौञ्जी ज्या मौर्वी मेखला क्रमेणे'

---

( १ ) इमे एव हरदत्ताचार्याः गौतमधर्मसूत्रव्याख्यातार इति निरूपितमापस्तम्बगृह्यसूत्रभूमिकायाम् । तत ततोऽवगन्तव्यम् ।

( २ ) गौतमधर्मसूत्रव्याख्यायां मिताक्षरायां मद्रपुरे तैलङ्गाक्षरमुद्रितायां ११९ पृष्ठे २३ पङ्क्तौ द्रष्टव्यम् ।

( गौ. ध. १--१५)ति सूत्रे(१) 'मूर्वा आरण्य ओषधिविशेषः, यस्याऽरत्निप्रमाणानि पत्राणि द्व्यङ्गुलविस्ताराणि, मरल् इति द्राविडभाषायां प्रसिद्धि'रिति,(२) 'कुण्डाशी' ( गौ. ध. (१५--१८ ) इति सूत्रे, 'किलासः त्वग्दोषः तेमल् इति द्राविडभाषायां प्रसिद्धः' इति च द्राविडीमेव प्रसिद्धिमुपाददाना इमे आत्मनो द्राविडदेशनिवासित्वं द्राविडभाषाभाषित्वञ्च स्पष्टमेवाऽवगमयन्ति ।

उज्वलानाकुलयोः पौर्वापर्यालोचनायां प्रथममनाकुला तत उज्वलेत्यवगम्यते, यत उज्वलायां बहुत्र "तस्यापि प्रयोगो गृह्य एवोक्तः । 'प्रपञ्चितमेतत् गृह्ये' "वयं तु न तथेति गृह्य एवाऽवोचाम" 'एतत् गृह्ये व्याख्यातम् , (आप. ध. पृ. ५१, ७२, २०८) इति व्यपदिष्टं तैः । अतो यथा मूलभूतयोर्गृह्यधर्मसूत्रग्रन्थयोः पौर्वापर्यं, एवमेव तद्वृत्त्योरनाकुलोज्वलयोरपीति प्रतीयते—इत्येतावदाधिकमत्र विवक्षितम् ।

एतन्मुद्रणविषये पुस्तकप्रदानेन, पुस्तकालयीयं नियममप्यविगणय्य यावन्मुद्रणमस्मद्धस्त एव पुस्तकस्याऽवस्थापनेन चाऽस्मान् सुदूरमनुगृहीतवतां श्रीमतामाचार्यध्रुवमहोदयानां, श्रीमतां पण्डितप्रकाण्डगोपीनाथकविराजमहोदयानां, अन्येषाञ्च विबुधवरेण्यानां विषयेऽत्यन्तमधमर्णावावां तान् प्रति कार्तज्ञमतितरामाविष्कुर्वहे ।

एवं सुरभारतीसमुज्जीवनबद्धपरिकरं श्रीजयकृष्णदासहरिदासगुप्तमहोदयं श्रेष्ठिवर्यं प्रति बह्वीराशिषः प्रयुञ्ज्वहे ।

इतः पूर्वतनान्यदसीयानि संस्करणान्यपेक्ष्य संस्करणेऽस्मिन् केनाऽपि चन वैजात्येन तादृश्या च छात्रोपकृत्या भाव्यमिति संकल्पेनाऽऽवाभ्यामत्र यतितम् । तत्राऽऽवां प्राप्तसाफल्यौ न वेति निर्णये मनीषिमनीषैव निकषोपलः

इति सर्वं शिवम् ॥

वाराणसी
चैत्रकृष्णनवमी सं० १९८८
३०—३—१९३२

सुधीजनवशंवदौ
अ. चिन्नस्वामिशास्त्री
अ. रामनाथशास्त्री च

१. २. तैलङ्गाक्षरमुद्रितमिताक्षरापुस्तके यथाक्रमं ४,१६, १२९ २३, पृष्ठे द्रष्टव्यम् ।

॥ श्रीः ॥

# आपस्तम्बधर्मसूत्रीयविषयानुक्रमणिका ॥


| विषयाः— | पृष्ठम्— |
|---|---|
| **प्रथमप्रश्ने—** | |
| **प्रथमकण्डिकायाम्—** | |
| धर्मप्रमाणानि । | ३ |
| चातुर्वर्ण्यम् । | ,, |
| तेषां जन्मतो ज्यैष्ठ्यम् । | ४ |
| वर्णधर्मः । | ६ |
| उपनयनविधिः । | ७ |
| विद्वानेवोपनेता । | ,, |
| उपनयनकालः । | ,, |
| व्रात्यसंस्कारः | ९ |
| **प्रथमप्रश्ने—** | |
| **द्वितीयकण्डिकायाम्—** | |
| व्रात्यसंस्कारः । | ११ |
| ब्रह्मचारिनियमाः । | १३ |
| दण्डाजिनमेखलादिकम् । | ,, |
| ब्रह्मचारिधर्माः । | १७ |
| **प्रथमप्रश्ने—** | |
| **तृतीयचतुर्थयोः कण्डिकयोः—** | |
| ब्रह्मचारिनियमाः । | १९ |
| **प्रथमप्रश्ने—** | |
| **पञ्चमकण्डिकायाम्—** | |
| अभिवादनम् । | ३१ |
| पादोपसंग्रहणम् । | ३३ |
| ब्रह्मचारिनियमाः । | ३९ |

| विषयाः— | पृष्ठम्— |
|---|---|
| **प्रथमप्रश्ने—** | |
| **षष्ठकण्डिकायाम्—** | |
| ब्रह्मचारिनियमाः । | ३७ |
| **प्रथमप्रश्ने—** | |
| **सप्तमकण्डिकायाम्—** | |
| ब्रह्मचारिधर्माः । | ४१ |
| स्नातकधर्माः । | ४६ |
| **प्रथमप्रश्ने—** | |
| **अष्टमकण्डिकायाम्—** | |
| ब्राह्मचारिधर्माः । | ४७ |
| अनध्यायाः | ५१ |
| **प्रथमप्रश्ने—** | |
| **नवमकण्डिकायाम्—** | |
| नैमित्तिकानध्यायः । | ५३ |
| **प्रथमप्रश्ने—** | |
| **दशमकण्डिकायाम्—** | |
| अनध्यायाः । | ५७ |
| **प्रथमप्रश्ने—** | |
| **एकादशकण्डिकायाम्—** | |
| अनध्यायाः । | ६१ |
| **प्रथमप्रश्ने—** | |
| **द्वादशकण्डिकायाम्—** | |
| नित्यस्वाध्यायाः । | ६९ |
| पञ्च महायज्ञाः । | ७१ |
| **प्रथमप्रश्ने—** | |
| **त्रयोदशकण्डिकायाम्—** | |
| पञ्चयज्ञादि । | ७३ |
| ओङ्कारप्रशंसा । | ७६ |

| विषयाः— | पृष्ठम् । |
|---|---|
| **प्रथमप्रश्ने-** | |
| **चतुर्दशकण्डिकायाम्—** | |
| नित्यकर्माणि । | ७७ |
| गुरूपसंग्रहणम् । | ७८ |
| अभिवाद्याः । | ७९ |
| अभिवादनविधिः । | ८० |
| कुशलप्रश्नः । | ८१ |
| **प्रथमप्रश्ने-** | |
| **पञ्चदशकण्डिकायाम्—** | |
| आचमनविधिः । | ८९ |
| **प्रथमप्रश्ने-** | |
| **षोडशकण्डिकायाम्—** | |
| आचमनविधिः । | ९१ |
| अभोज्यानि । | ९३ |
| क्वचित् भोजननिषेधः । | ९५ |
| **प्रथमप्रश्ने-** | |
| **सप्तदशकण्डिकायाम्—** | |
| अभोज्यान्नानि । | ९७ |
| अभक्ष्याणि । | ९९ |
| **प्रथमप्रश्ने-** | |
| **अष्टादशकण्डिकायाम्—** | |
| अनापद्वृत्तिः । | १०३ |
| अभोज्यान्नाः । | १०५ |
| भोज्यान्नाः । | १०७ |
| **प्रथमप्रश्ने-** | |
| **एकोनविंशकण्डिकायाम्—** | |
| भोज्यान्नाः । | १०९ |
| **प्रथमप्रश्ने-** | |
| **विंशतितमकण्डिकायाम्—** | |
| लौकिकप्रयोजनानपेक्षेणैव धर्मानुष्ठानम् । | ११२ |
| धर्मलक्षणम् । | ११३ |

| विषयाः— | पृष्ठम् । |
|---|---|
| अपण्यानि । | ११५ |
| **प्रथमप्रश्ने-** | |
| **एकविंशकण्डिकायाम्—** | |
| पतनीयानि । | ११७ |
| अशुचिकराणि । | ११९ |
| **प्रथमप्रश्ने-** | |
| **द्वाविंशकण्डिकायाम्—** | |
| अध्यात्मपटलम् । | १२१ |
| आत्मज्ञानोपायाः । | १२३ |
| आत्मलाभश्रैष्ठ्यम् । | १२४ |
| आत्मज्ञानप्रशंसा । | १२५ |
| आत्मज्ञानसंपादनम् । | १२९ |
| आत्मस्वरूपम् । | १३१ |
| **प्रथमप्रश्ने-** | |
| **त्रयोविंशकण्डिकायाम्—** | |
| आत्मज्ञानफलम् । | १३३ |
| भूतदाहीया दोषाः । | १३६ |
| आत्मलाभयोगाः । | १३७ |
| **प्रथमप्रश्ने-** | |
| **चतुर्विंशकण्डिकायाम्—** | |
| क्षत्रियवधप्रायश्चित्तम् । | १४० |
| ब्रह्महत्याप्रायश्चित्तम् । | १४१ |
| ब्रह्मघ्नो वृत्तिः । | १४३ |
| सुरापानप्रायश्चित्तम् । | १४५ |
| गुरुदारगमनप्रायश्चितम् । | ,, |
| **प्रथमप्रश्ने-** | |
| **पञ्चविंशकण्डिकायाम्—** | |
| स्तेयादिप्रायश्चित्तम् । | १४७ |
| **प्रथमप्रश्ने-** | |
| **षड्विंशकण्डिकायाम्—** | |
| धेनुहननप्रायश्चित्तम् । | १४८ |
| अपतनीयप्रायश्चित्तम् । | १४९ |

विषयाः— पृष्ठम् ।

प्रथमप्रश्ने—
सप्तविंशकण्डिकायाम्—
अपतनीयप्रायश्चित्तम् । १९३

प्रथमप्रश्ने—
अष्टाविंशकण्डिकायाम्—
अपतनीयप्रायश्चित्तम् । १९७
भ्रूणहत्याप्रायश्चित्तम् । १९९

प्रथमप्रश्ने—
एकोनत्रिंशकण्डिकायाम्—
पतितधर्माः । १६१

प्रथमप्रश्ने—
त्रिंशदादिषु तिसृषु कण्डिकासु—
स्नातकधर्माः । १७९

इति प्रथमप्रश्नविषयाः ॥

## अथ द्वितीयप्रश्नविषयाः ॥

द्वितीयप्रश्ने—
थमद्वितीययोः कण्डिकयोः—
गृहस्थधर्माः । १७९

द्वितीयप्रश्ने—
तृतीयकण्डिकायाम्—
वैश्वदेवम् । १८७
वैश्वदेवबलिः । १८९

द्वितीयप्रश्ने—
चतुर्थकण्डिकायाम्—
वैश्वदेवबलिः । १९१
गृहस्थधर्माः । १९३

द्वितीयप्रश्ने—
पञ्चमकण्डिकायाम्—
गृहस्थधर्माः । १९७

द्वितीयप्रश्ने—
षष्ठादिषु चतसृषु कण्डिकासु—
अतिथिपूजा । २०१

द्वितीयप्रश्ने—
दशमकण्डिकायाम्—
ब्राह्मणादिवृत्तिः । २१९
अवध्याः । २१६
दण्डप्रणयनम् । २१७

द्वितीयप्रश्ने—
एकादशकण्डिकायाम्—
मार्गप्रदानम् । २१८
द्वितीयविवाहः । २१९
सगोत्राविवाहनिषेधः । २२१
विवाहभेदाः । २२३

द्वितीयप्रश्ने—
द्वादशकण्डिकायाम्—
अभिनिम्रुक्तादिप्रायश्चित्तम् । २२९

द्वितीयप्रश्ने—
त्रयोदशकण्डिकायाम्—
स्त्रीरक्षणम् । २२९
पुत्रस्य दानादिनिषेधः । २३१
दायभागः । २३३

द्वितीयप्रश्ने—
चतुर्दशकण्डिकायाम्—
दायविभागः । २३९
द्वादश पुत्राः । २३७

| विषयाः— | पृष्ठम् । |
| --- | --- |
| द्वितीयप्रश्ने- | |
| पञ्चदशकण्डिकायाम्— | |
| प्रेतोदकदानम् । | २४५ |
| अहविष्यहोमः । | २४७ |
| द्वितीयप्रश्ने- | |
| षोडशकण्डिकायाम्— | |
| श्राद्धकल्पः । | २५१ |
| द्वितीयप्रश्ने- | |
| सप्तदशकण्डिकायाम्— | |
| श्राद्धकल्पः । | २५५ |
| तस्य कालः । | ,, |
| श्राद्धीयब्राह्मणः । | २५७ |
| द्वितीयप्रश्ने- | |
| अष्टादशकण्डिकायाम्— | |
| नित्यश्राद्धम् । | २६१ |
| द्वितीयप्रश्ने- | |
| एकोनविंशकण्डिकायाम्— | |
| पुष्ट्यर्थप्रयोगः । | २६३ |
| पुष्टिकामप्रयोगः । | २६५ |
| द्वितीयप्रश्ने- | |
| विंशकण्डिकायाम्— | |
| पुष्ट्यर्थप्रयोगः । | २६७ |
| द्वितीयप्रश्ने- | |
| एकविंशकण्डिकायाम्— | |
| आश्रमाः । | २६९ |
| सन्यासिधर्माः । | २७१ |
| वानप्रस्थाश्रमः । | २७३ |
| द्वितीयप्रश्ने- | |
| द्वाविंशकण्डिकायाम्— | |
| वानप्रस्थधर्माः । | २७५ |
| ब्रह्मचर्यादिप्रशंसा । | २७७ |
| द्वितीयप्रश्ने- | |
| त्रयोविंशकण्डिकायाम्— | |
| गार्हस्थ्यश्रैष्ठ्यम् । | २७९ |
| द्वितीयप्रश्ने- | |
| चतुर्विंशकण्डिकायाम्— | |
| गार्हस्थ्यश्रैष्ठ्यम् । | २८१ |
| द्वितीयप्रश्ने- | |
| पञ्चविंशकण्डिकाम्— | |
| राजधर्माः । | २८५ |
| द्वितीयप्रश्ने- | |
| षड्विंशकण्डिकायाम— | |
| राजधर्माः । | २८७ |
| नियोगविधिः । | २८९ |
| द्वितीयप्रश्ने- | |
| सप्तविंशकण्डिकायाम्— | |
| परस्त्रीगमनप्रायश्चित्तम् । | २९१ |
| द्वितीयप्रश्ने- | |
| अष्टाविंशकण्डिकायाम्— | |
| दण्डानर्हाः । | २९५ |
| द्वितीयप्रश्ने- | |
| एकोनत्रिंशकण्डिकायाम्— | |
| साक्ष्यविधिः । | २९७ |
| धर्मलक्षणम् । | २९९ |


इति द्वितीयप्रश्नविषयाः ।

॥ श्रीः ॥

शिवाभ्यां नमः ॥

# आपस्तम्बमहर्षिप्रणीतं

# धर्मसूत्रम् ॥

## श्रीहरदत्तविरचितया उज्ज्वलाख्यया वृत्त्या सहितम् ॥

---

### प्रथमः प्रश्नः ॥

(१)प्रणिपत्य महादेवं हरदत्तेन धीमता ।
धर्माख्यप्रश्नयोरेषा क्रियते वृत्तिरुज्ज्वला ॥ १ ॥

**अथातस्सामयाचारिकान् धर्मान् व्याख्यास्यामः ॥ १ ॥**

अथशब्द आनन्तर्ये । अतश्शब्दो हेतौ । उक्तानि श्रौतानि गार्ह्याणि च कर्माणि । तानि च वक्ष्यमाणान्धर्मानपेक्षन्ते । कथम् ? आचान्तेन कर्म कर्तव्यं, शुचिना कर्तव्य'मिति वचनादाचमनशौचादीनपेक्षन्ते ।

(२)'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' ।

इति वचनात् सन्ध्यावन्दनम् । एवं 'अशुचिकरनिर्वेषः,'(३) 'द्विजातिकर्मभ्यो हानिः पतनम्' इति वचनात् ब्रह्महत्यादिप्रायश्चित्तानि च । एवमन्येष्वपि यथासम्भवमपेक्षा द्रष्टव्या । अतस्तदनन्तरं सामयाचारिकान् धर्मान् व्याख्यास्यामः । पौरुषेयी व्यवस्था समयः । स च त्रिविधः—विधिर्नियमः प्रतिषेधश्चेति । तत्र प्रवृत्तिप्रयोजनो विधिः—(४)'सन्ध्योश्च

---

१. मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥ १ ॥

इत्यधिकः पाठः क० पु० ।

२. दक्षस्मृ० अ० २. श्लो. २९. 'यदन्यत् कुरुते कर्म न तस्य फलभाक्भवेत्' इति तस्योत्तरार्धम् ।

३. गौ० ध० २१. ४. "अशुचेर्द्विजाती"ति. घ. पु. ४. आप० ध० १. ३०. ८.

बहिर्ग्रामादासनं वाग्यतश्चे'त्यादिः। निवृत्तिप्रयोजनावितरौ। (१)'प्राङ्मुखोऽन्नानि भुञ्जीते'ति नियमविधिः। क्षुदुपघातार्था भोजने प्रवृत्तिः। शक्यं च (२)यत्किञ्चिद्दिङ्मुखेनापि भुञ्जानेन क्षुदुपहन्तुम्। तत्र नियमः क्रियते-प्राङ्मुख एव भुञ्जीत, न दक्षिणादिमुख इति। (३)परिसङ्ख्या तु नियमस्यैव कियानपि भेदः। एवं द्रव्यार्जने रागात्प्रवृत्तं प्रति नियमः क्रियते-'याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो द्रव्यमार्जयेत, न कृषिवाणिज्यादिने'ति। (४)'ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जये'दित्यादिः प्रतिषेधः। समयमूला आचारास्समयाचाराः तेषु भवाः सामयाचारिकाः। एवम्भूतान् धर्मानिति। (५)कर्मजन्योऽभ्युदयनिःश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः। तद्धेतुभूतकर्मव्याख्यानमेव तद्व्याख्यानम्। तत्र विधिषु तावद्विषयानुष्ठानाद्धर्म इति नास्ति विप्रतिपत्तिः। नियमेष्वपि (६)नियमानुष्ठानाद्धर्मः, प्रतिषेधेष्वपि(७)नञर्थानुष्ठानाद्धर्म इति केचित्। अत एव धर्मानित्यविशेषेणाह।

अन्ये तु-विधिष्वेव धर्मः, इतरयोस्तु विपरीतानुष्ठानादधर्मः केवलम, न तु विषयानुष्ठानात् कश्चिद्धर्मः। न ह्यप्रतिगृह्णन्नपिबन्वा सुरां धार्मिक इति लोके प्रसिद्धः। सूत्रे तु धर्मग्रहणमधर्मस्याप्युपलक्षणमिति स्थितिः-इति ॥ १ ॥

किं भोः समयोऽपि प्रमाणम्, ? (८)यदि स्यादिदमपि प्रमाणं भवितुमर्हति-'चैत्यं वन्देत स्वर्गकामः। प्रगे भुञ्जीत। केशानुल्लुँञ्छेत्।

---

१. आप० ध० १. ३१. १. २. यत्किञ्चनदिङ्मुखेन इति क० पु०।

३. प्रतिषेधः परिसंख्येत्यनर्थान्तरम्। परिसंख्या वर्जनबुद्धिः। तद्विषयको विधिः परिसंख्याविधिः। स परिसंख्यापदेनाऽप्यभिधीयते इति मीमांसकानां मतम्। अत एव विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥ इत्येव वार्तिककारैरुक्तम्। ग्रन्थकारस्त्वयं परिसंख्यां नियमविधावेवान्तर्भावयति ॥

४. आप० ध० १. ३१. ६.

५. इदं च तार्किकादिमतमनुसृत्य प्रभाकरमतञ्च। भाट्टमते तत्तत्कर्मणामेव यागदानहोमादिरूपाणां चोदनालक्षणानां धर्मत्वाङ्गीकारात्। उक्तं हि भट्टपादैः-

श्रेयो हि पुरुषप्रीतिस्सा द्रव्यगुणकर्मभिः।
चोदनालक्षणैस्साध्या तस्मात्तेष्वेव धर्मता ॥ इति। श्लो. वा. १०. १९१.

६. पक्षेऽप्राप्तांशस्य पूरणकरणादित्यर्थः।

७. तत्तन्निषेध्यक्रियाप्रागभावपरिपालनादिति यावत्।

८. यदि प्रमाणमिदमपि प्रमाणं इति क० पु०।

तिष्ठन् भुञ्जीत । न स्नाया'दिति । तत्राह—

धर्मज्ञसमयः प्रमाणम् ॥ २ ॥

न हि ब्रूमः समयमात्रं प्रमाणमिति । किं तर्हि ? धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः ॥ २ ॥

कथं पुनरिद(१)मवगतं मन्वादयो धर्मज्ञा न बुद्धादय इति ? यद्युच्यते–बुद्धादीनामतीन्द्रियेऽर्थे ज्ञानं न सम्भवतीति, तन्मन्वादिष्वपि समानम् । अथ तेषां धर्मज्ञानातिशयादतीन्द्रियेऽपि ज्ञानं सम्भवतीति, तत् बुद्धादिष्वपि समानम् । यथाऽऽहुः—

(२) 'सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा ।
तावुभौ यदि धर्मज्ञौ मतभेदः कथं तयोः ॥ इति ।

वक्तव्यो वा विशेषः, तमाह—

वेदाश्च ॥ ३ ॥

चोऽवधारणे । वेदा एव मूलप्रमाणं धर्माधर्मयोः । (३)न च नित्यनिर्दोषेषु वेदेषूक्तोपालम्भसम्भवः । (४)स्वतःप्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामाण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणम्, धर्मज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह—

(५)वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥

गौतमोऽपि—(६)'वेदो धर्ममूलं, तद्विदां च स्मृतिशीले ।' इति । यद्यप्यप्रत्यक्षो वेदो मूलभूतोऽस्मदादिभिर्नोपलभ्यते । तथापि (७)मन्वादय उपलब्धवन्तः इत्यनुमीयते । वक्ष्यति—(८)'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति ॥ ३ ॥

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥ ४ ॥

---

१. अवगम्यते इति ख० पु० ।

२. अष्टसहस्री० पृ० ५. श्लोकोऽयं कौमारिल इति अष्टसहस्रीटिप्पण्याम् ।

३. नित्येषु निर्दोषेषु, इति ख० पु० । अपौरुषेयेषु निर्दोषेषु इति घ. पु.

४. मीमांसकमते तावत् वैदिकानां वाक्यानां नित्यत्वाभ्युपगमात् तत्र कर्तृतया पुरुषसम्बन्धाभावात् स्वत एव प्रामाण्यमङ्गीकृतम् । तदाभिप्रेत्याह—स्वतः प्रमाणस्येति ।

५. मनु० स्मृ० २. ६. ६. गौ० ध० १. १, २.

७. 'मन्वादिभिरुपलभ्यते इत्यनुमीयते' इति ख० पु० । ८. आ० ध० १. १२. १०.

ब्राह्मणाद्याश्चत्वारो वर्णसंज्ञिकाः । ते च सामयाचारिकैर्धर्मैरधिक्रियन्ते । (१)चतुर्णामेवोपदेशेऽपि पुनश्चतुर्ग्रहणं (२)यथाकथञ्चित् चतुर्ष्वन्तर्भूतानामपि ग्रहणार्थम् । ततश्च(३) 'ब्राह्मणः क्षत्रियो वैश्य' इति बौधायनादिभिरुक्तानामनुलोमादीनामप्यत्र ग्रहणं मतम् । तथा च गौतमः प्रतिलोमानामेव धर्मेऽनधिकारमाह—(४)'प्रतिलोमास्तु धर्महीना' इति ॥ ४ ॥

**तेषां पूर्वः पूर्वो जन्मतश्श्रेयान् ॥ ५ ॥**

जन्मत इति वचनात् सद्वृत्तादपि शूद्राद्वैश्यब्रुवोऽपि श्रेयान् । एवं वैश्यात् क्षत्रियः, क्षत्रियात् ब्राह्मणः ॥ ५ ॥

**अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि ॥ ६ ॥**

शूद्रवर्जितानां त्रयाणां वर्णानामदुष्टकर्मणामुपायनादयो धर्माः । उपायनमुपनयनम् । नात्र त्रैवर्णिकानामुपनयनादि विधीयते, प्राप्तत्वात् । नापि शूद्राणां प्रतिषिध्यते, प्राप्त्यभावात् । तथा हि—उपनयनं तावद्गृह्ये (५)'गर्भाष्टमेषु ब्राह्मणमुपनयीते'त्यादिना त्रैवर्णिकानामेव विहितम् । इहापि तथैव विधास्यते । अध्ययनमपि (६)'उपेतस्याचार्यकुले ब्रह्मचारिवास' इत्यारभ्य विधानात् अनुपनीतस्य शूद्रस्याप्राप्तमेव । किं च (७)'श्मशानवच्छूद्रपातिता'विति (८)अध्ययननिषेधो वक्ष्यते । (९)यस्य समीपे नाध्येयं स कथं स्वयमध्येतुमर्हति ।

अग्न्याधेयमपि (१०)'वसन्ता ब्राह्मण' इत्यादि त्रैवर्णिकानामेव विहितम् । फलवन्ति चाग्निहोत्रादीनि कर्माणि (११)'स त्रयाणां वर्णाना'मित्युक्तत्वात् त्रैवर्णिकानामेव नियतानि । विद्याग्न्यभावाच्च शूद्राणामप्रसक्तानि । उक्तो विद्याग्न्यभावः । तस्माद्दुष्टकर्मप्रतिषेधार्थं सूत्रम् । यथा शास्त्रान्तरे-(१२) 'द्विजातिकर्मभ्यो हानिः पतन'मिति । अप्रतिषेधे तु दुष्टकर्मणामप्यधि·

---

१. 'वर्णानामुपदेशेऽपि पुनश्चतुर्ग्रहणं यथाकथञ्चिच्चतुर्ष्वन्तर्भूतानामपी'ति ख. पु.

२. यथाक्रम इति क० पु. ३. बौ० ध० १. ७. १. ४. गौ० ध० ४. २५.

५. आप० गृ० ८. २. ६. आप० ध० १. २. ११. ७. आप० ध० १. ९. ९.

८. अध्ययनप्रतिषेधप्रकरणे वक्ष्यत इति ख० पु. ।

९. यस्य यस्य, स सः इति द्विरुक्तिः क० पु० । १०. तै. ब्रा. १. १. २.

११. आप० परि० १. २ १२. गौ० ध० २१. ४.

कारो भवत्येव । 'फलवन्ति च कर्माणी'त्यभिधानात्, क्रियते इति कर्मेति निर्वचनात् । (१)'प्रागुपनयनात् कामचारवादभक्ष' इति गौतमस्मरणं ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसम्भवात् अदुष्टकर्मणा(२)मित्युक्तम् । शूद्रप्रतिषेधस्तु प्राप्तानुवादः ॥ ६ ॥

यथा ब्राह्मणादीनामुपनयनादयो धर्माः प्रधानभूताः तादृशं शूद्रस्य कर्माऽऽह—

**शुश्रूषा शूद्रस्येतरेषां वर्णानाम् ॥ ७ ॥**

इतरेषां ब्राह्मणादीनां वर्णानां या शुश्रूषा सा शूद्रस्य परमो धर्मः ॥ ७ ॥

(३)तत्र विशेषमाह—

**पूर्वस्मिन्पूर्वस्मिन्वर्णे निःश्रेयसं भूयः ॥ ८ ॥**

सर्वप्रकारं कृताया अपि वैश्यशुश्रूषायाः मात्रयापि कृता क्षत्रियशुश्रूषा बहुतरं फलं साधयति । एवं क्षत्रियशुश्रूषाया ब्राह्मणशुश्रूषा ॥८॥

उपायनं वेदाध्ययनमित्यादि यदुक्तं अस्मिन् क्रमे उपनयने विशेषमाह—

**उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः ॥ ९ ॥**

विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः । तस्यायं श्रुतिविहितस्संस्कारः उपनयनं नाम । 'विद्यार्थस्ये'ति वचनात् मूकादेर्न भवति । तथा च शङ्खलिखितौ (४)'नोन्मत्तमूकान् संस्कुर्यात्' इति । (५)लिङ्गस्य विवक्षितत्वात् स्त्रिया अपि न भवति यद्यपि तस्याः (६)'अग्ने गृहपते' इत्यादिकया विद्यया अर्थः । 'श्रुतित' इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तप्राप्त्यर्थम् ॥ ९ ॥

अनेकवेदाध्यायिनां वेदव्रतवदुपनयनमपि प्रतिवेदं भेदेन कर्तव्यमिति प्राप्ते उच्यते —

**सर्वेभ्यो वै वेदेभ्यस्सावित्र्यनूच्यत इति हि ब्राह्मणम् ॥१०॥**

(७)'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्यास्सावित्र्याः परमेष्ठी प्रजापतिः ॥' इति (८)मनुः ।

ततश्चोपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्वे वेदा अनूक्ता

---

१. गौ०ध०२.१. २. उपनयनमुक्तं इति क० पु० ३. तत्र विशेषः, इति क. पु.
४. इदानीमुपलभ्यमानमुद्रितशङ्खलिखितस्मृतिपुस्तकेषु श्लोकोऽयं नोपलभ्यते ।
५. विद्यार्थस्येत्यत्र पुंलिङ्गस्य विवक्षितत्वात् इत्यर्थः ।
६. तै. सं. १. ५. ६. ७. मनु. स्मृ. २. ७७. ८. मनुवचनम् इति. ख. पु.

भवन्तीत्यगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थमिति । अस्मिन्नर्थे ब्राह्मणमपि भवति (१)ब्राह्मणमेव वा पठितम् । आथर्वणस्य वेदस्य पृथगुपनयनं कर्तव्यम् । तथा च तत्रैव श्रुतम्—(२)नान्यत्र संस्कृतो भृग्वङ्गिरसोऽधीयीते'ति ॥ १० ॥

विद्वानेवोपनेताऽभिगम्यत इति विधातुमविदुषो निन्दामाह—

**तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाऽविद्वानिति हि ब्राह्मणम् ॥ ११ ॥**

यथा कश्चित् तमसस्सकाशात्तम एव प्रविष्टो न किञ्चिज्जानाति एवमेवैषः यं माणवकमविद्वानुपनयते, तथा यश्चाविद्वान् । उपनीयते इत्यपेक्ष्यते । यश्च स्वयमविद्वान् सन्नुपनीयते सोऽपि तमस एव तमः प्रविशति । अस्मिन्नर्थे ब्राह्मणमपि भवतीति ॥ ११ ॥

कीदृशस्तर्ह्युपनेताऽभिगम्यः ? तमाह—

**तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत् ॥ १२ ॥**

अविच्छिन्न(३)वेदवेदिसम्बन्धे कुले जन्म अभिजनः । षड्भिरङ्गैस्सहैव यथावदर्थज्ञानपर्यन्तमधीतो वेदो विद्या । सर्वासम्भवे वेद एव वा । तस्मिन्नुपनयने कर्तव्ये ताभ्यां अभिजनविद्याभ्यां समुदेतं सम्पन्नम्, समाहितं विहितप्रतिषिद्धेष्ववहितमनसम्, संस्कर्तारमाचार्यमीप्सेत् । इच्छया करणं लक्ष्यते । आप्नुयादभिगच्छेदिति ॥ १२ ॥

**तस्मिंश्चैव विद्याकर्माऽऽन्तमविप्रतिपन्ने धर्मेभ्यः ॥ १३ ॥**

तस्मिन्नेव चोपनेतरि विद्याकर्म विद्याग्रहणं कर्तव्यम् । आन्तमासमाप्तेः, अविप्रतिपन्ने धर्मेभ्यः यद्यसावाचार्यो धर्मेभ्यो न प्रच्युतो भवति । प्रच्युते तु तस्मिन्नसम्पर्कार्हे अन्यतोऽपि विद्याकर्म भवत्येव ।

*येषां चाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते । क-

---

१. प्रमाणं भवति, ब्राह्मणमिति हि वाचा पठितम्, इत्यशुद्धः पाठः ख. पु.

२. गोप० ब्रा० १. २९. ३. वेदवित्सम्बन्धे इति. क. पु.

*. एतच्चिह्नान्तर्गतो भागः प्रक्षिप्त इति Mysore पुस्तके । परन्तु क. ग. पुस्तकयोरुपलभ्यते पाठः । एतच्च गुरुमतानुसारेण । गुरवो हि "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत" इति विधिनाऽऽचार्यत्वसिध्यर्थमध्यापनं विदधताऽध्ययनमपि प्रयुज्यते, अतोऽध्यापनान्यथानुपपत्त्यैव सिध्यदध्ययनं न स्वविधिना "स्वाध्यायोऽध्येतव्य" इत्यनेन विधीयते इति ब्रुवते । अतस्तन्मतखण्डनमिदम् ।

थम् ? उपनीयाध्यापनेनाचार्यकं भावयेदिति । सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारः सम्भवति । तं कथमन्योऽध्यापयेत् ? एतेन मध्ये आचार्यमरणे माणवकस्य तदध्ययनं नाचार्यान्तरात् सम्भवतीति द्रष्टव्यम्* ॥ १३ ॥

(१)आचार्यशब्दं निराह—

**यस्माद्धर्मानाचिनोति स आचार्यः ॥ १४ ॥**

यस्मात्पुरुषादयं माणवकः धर्मानाचिनोति आत्मनः प्रचिनोति शिक्षते स आचार्यः । (२)'अप्यक्षरसाम्यान्निर्ब्रूयादि'ति चकारमात्रेणेदं निर्वचनम् । अनेन प्रकारेण माणवकमाचार्यः शौचाचारांश्च शिक्षयेदित्युक्तं भवति ॥ १४ ॥

**तस्मै न द्रुह्येत्कदाचन ॥ १५ ॥**

तस्मै एवंभूताचार्याय कदाचन कदाचिदपि न द्रुह्येत् तद्विषयमपकारं न कुर्यात् ॥ १५ ॥

कस्मादित्यत आह—

**स हि विद्यातस्तं जनयति ॥ १६ ॥**

स ह्याचार्यः तं माणवकं विद्यातो जनयति, यथा पिता मातृतः ।
(३)अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥
इति शास्त्रान्तरम् ॥ १६ ॥

**तच्छ्रेष्ठं जन्म ॥ १७॥**

तद्विद्यातो जन्म श्रेष्ठं प्रशस्ततमम्; अभ्युदयनिःश्रेयसहेतुत्वात् ॥१७॥

मातापितृभ्यामाचार्यः श्रेष्ठ इत्याह—

**शरीरमेव मातापितरौ जनयतः ॥ १८ ॥**

मातापितरौ शरीरमात्रमेव काष्ठकुड्यादिसमं जनयतः । आचार्यस्तु सर्वपुरुषार्थक्षमरूपं जनयति । (४)"आचार्यः श्रेष्ठो गुरूणा"मिति गौतमः ॥ १८ ॥

**वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं, गर्भाष्टमेषु ब्राह्मणं, गर्भैकादशेषु राजन्यं,**

---

१. आचार्यशब्दनिर्वचनमाह. इति क. ग. पु. २. निरु. २. १. १.
३. मनु. स्मृ. २. १७०. ४. गौ ध. २. ५०

**गर्भद्वादशेषु वैश्यम् ॥ १९ ॥**

(१)वसन्ते ब्राह्मणमित्यादि गृह्ये गतम् ॥ १९ ॥

**अथ काम्यानि ॥ २० ॥**

कामनिमित्तान्युपनयनानि वक्ष्यन्ते ॥ २० ॥

**(२)सप्तमे ब्रह्मवर्चसकामम् ॥ २१ ॥**

**अष्टम आयुष्कामम् ॥ २२ ॥**

**नवमे तेजस्कामम् ॥ २३ ॥**

**दशमेऽन्नाद्यकामम् ॥ २४ ॥**

**एकादश इन्द्रियकामम् ॥ २५ ॥**

**द्वादशे पशुकामम् ॥ २६ ॥**

'ब्रह्मवर्चसकाम'मित्यादीनि षट् सूत्राणि स्पष्टार्थानि । सर्वत्रोपनयीतेत्यपेक्ष्यते ॥ २१–२६ ॥

(३)'आचार्याधीनस्स्या' दित्यादीनि यानि ब्रह्मचारिणो व्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पमाह—

**आषोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याऽऽचतुर्विंशाद्वैश्यस्य यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः ॥ २७ ॥**

आकारोऽभिविधौ । अत्ययोऽतिक्रमः । स एवाऽऽत्ययः तदभावोऽनात्ययः । याद्दच्छिको दीर्घः, आङो वा प्रश्लेषः । प्रकरणादुपनयनकालस्येति गम्यते । यथा व्रतेषु समर्थः स्यात् तथैतावान् कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सत्यष्टमवर्षाद्यतिक्रमे वक्ष्यमाणं प्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तश्चित्कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव ॥ २७ ॥

तदानीं प्रायश्चित्तमाह—

**अतिक्रान्ते सावित्र्याः ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २८ ॥**

---

१. आप. गृ. ११. २. २. इतः प्रभृति सूत्रषट्कमेकसूत्रतया लिखितं क. पुस्तके । ३. आप. ध. १. २. १९.

यस्य यः सावित्र्याः काल उक्तः तदतिक्रमे त्रैविद्यकं त्र्यवयवा विद्या तामधीयते ये ते त्रैविद्याः, तेषामिदं त्रैविद्यकम्। (१)'गोत्रचरणाद्वुञ्'। 'चरणाद्धर्माम्नाययोरि'ति वुञ्। एवंभूतं ब्रह्मचर्यं, अग्निपरिचर्यामध्ययनं गुरुशुश्रूषामिति परिहाप्य, सकलब्रह्मचारिधर्मं चरेत् । कियन्तं कालम्? ऋतुं, 'कालाध्वनो'रिति द्वितीया। ऋतुमिति वचनाद्दत्वारम्भे प्रायश्चित्तारम्भमिच्छन्ति ॥ २८ ॥

अथोपनयनम् ॥ २९ ॥

एवं चरितव्रत उपनेतव्यः ॥ २९ ॥

ततस्संवत्सरमुदकोपस्पर्शनम् ॥ ३० ॥

ततः उपनयनादारभ्य सम्वत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम्। शक्तस्य त्रिषवणं स्नानम्(२) अशक्तस्य यथाशक्ति ॥ ३० ॥

अथाऽध्याप्यः॥ ३१ ॥

एवं चरितव्रतः पश्चादध्याप्यः ॥ ३१ ॥

अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥ ३२ ॥

यस्य माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च, ते तथाविधास्स माणवका ब्रह्महसंस्तुताः ब्रह्महण इत्येव कीर्तिताः ब्रह्मवादिभिः। अतास्मिन् तच्छब्दयोगस्तद्धर्मप्राप्त्यर्थः। एवं च (३)'श्मशानवच्छूद्रपतिता'वित्यध्ययननिषेधप्रकरणे वक्ष्यते । ततश्च ब्रह्म यथा ब्रह्महसमीपे नाध्येयमेवमेषामपीति ॥ ३२ ॥

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥ ३३ ॥

तेषामेतेषामभ्यागमनमाभिमुख्येन गमनम्, मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत्। यद्यपि भिक्षा सर्वतः प्रतिग्राह्येति वक्ष्यते भोजनमुद्यतमपि वर्जयेत् (४)'अपि दुष्कृतकारिण' इति सत्यपि वचने। विवाहं च वर्जयेत् यद्यपि (५)'स्त्रीरत्नं दुष्कुलादपी'ति मानवस्मरणम् ॥ ३३ ॥

तेषामिच्छतां प्रायश्चित्तम् ॥ ३४ ॥

---

१. पा० सू० ४.३. १२६. २. अन्यस्य' क. ख. पु. ३. आप० ध० १. ९. ९. ४. आप० ध० १.१९.१३. ५. मनु० स्मृ० २. २३८.

इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तं कारयितव्यम् ॥ ३४ ॥

**यथा प्रथमेऽतिक्रम ऋतुरेवं सम्वत्सरः ॥ ३५ ॥**

यथा प्रथमेऽतिक्रमे ब्रह्मचर्यस्य ऋतुः कालः एवमन्यस्मिन्नतिक्रमे संवत्सरः कालः ॥ ३५ ॥

**अथोपनयनम् ॥३६॥ तत उदकोपस्पर्शनम् ॥ ३७ ॥**

गते ॥ ३६ ॥ ३७ ॥

इत्यापस्तम्बधर्मसूत्रे प्रथमप्रश्ने प्रथमा (१)कण्डिका ।

---

**प्रतिपूरुषं संख्याय संवत्सरान् यावन्तोऽनुपेताः स्युः ॥१॥**

यदि पितैवानुपेतः ततस्संवत्सरमेकम् । अथ पितामहोऽपि, ततो द्वौ । अथ स्वयमपि यथाकालमनुपेतः, ततः संवत्सरानिति ॥ १ ॥

अथोदकोपस्पर्शने मन्त्राः—

**सप्तभिः पावमानीभि"र्यदन्ति यच्च दूरक" इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाऽऽङ्गिरसेनेति ॥ २ ॥**

पवमानः सोमो देवता यासां ताः (२)पावमान्यः. । यजुष्यवित्रेण(३)'आपो अस्मान्मातरः शुन्धन्त्वि' त्यनेन, सामपवित्रेण 'कया नश्चित्र आभु

---

१. खण्डिका इति. क. पुस्तके । खण्डः इति ख. पुस्तके । एवमेव प्रतिखण्डसमाप्ति

२. यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वितज्जहि ॥ १ ॥
पवमानस्सोऽअद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ २ ॥
यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः ॥ ३ ॥
यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्म सवैः पुनीहि नः ॥ ४ ॥
उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ५ ॥
त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥ ६ ॥
पुनन्तु मां देवजनाः पुनन्तु वसवो धिया । विश्वे देवाः पुनीतन मा जातवेदः पुनीहि मा ॥७॥ (ऋ० सं० ७.२. १७, १८.) इति सप्त पावमान्यः ॥

३. आपो अस्मान् मातरश्शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्रवहन्तु रिप्रम्" (तै.सं. १.२.१.) इति यजुःपवित्रम् । 'कया नश्चित्र आ भुवदूती सदावृधस्सखा । कया शचिष्ठया वृता' इत्यस्यामृचि गीयमानं वामदेव्याख्यं साम सामपवित्रम् ॥

वदि' त्यादिगीतेन वामदेव्येन साम्ना, आङ्गिरसेन(१) 'हंसःशुचिषदि'त्यनेन एतैरञ्जलिना शिरस्यपोऽवसिञ्चेत् ॥ २ ॥

अपि वा व्याहृतिभिरेव ॥ ३ ॥

पूर्वैः सह व्याहृतीनां विकल्पः ॥ ३ ॥

अथाऽध्याप्यः ॥ ४ ॥

गतम् ॥

तत्र 'यस्य पिता पितामह' इत्युपक्रमे 'यस्ये'त्येकवचनमन्ते ऽ'ध्याप्य' इति । मध्ये तु 'ब्रह्महसंस्तुताः' 'तेषामभ्यागमनं' 'तेषामिच्छता'मिति बहुवचनम् । तत्रोपक्रमोपसंहारानुसारेण माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षमित्यवोचाम ॥ ४ ॥

अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तुताः ॥ ५ ॥

प्रपितामहादि प्रपितामहादारभ्य प्रपितामहः पितामहः पिता स्वयं च यथाकालमिति । ते तथाविधा माणवकाः श्मशानसंस्तुताः । एतेन (२)'श्मशाने सर्वतः शम्याप्रासा' दित्यध्ययननिषेध एषामपि सन्निधौ भवति ॥ ५ ॥

तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं(३)तत उदकोपस्पर्शनं पावमान्यादिभिः ॥ ६ ॥

गतम् । पावमान्यादिभिरित्यनेनैव प्रतिपूरुषं सङ्ख्याय सम्वत्सरानित्येतदपि द्रष्टव्यम् ॥ ६ ॥

अथ गृहमेधोपदेशनम् ॥ ७ ॥

गृहमेधो गृह्यशास्त्रं गृहस्थधर्मो वा ॥ ७ ॥

---

१. हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्" ( तै. सं. ४. २. १. ४. ) इत्याङ्गिरसः ॥

२ आप. ध. १. ९. ६. ३. ततस्संवत्सरमुदकोपस्पर्शनम् . इति ग. पु. ।

नाध्यापनम् ॥ ८ ॥

नाध्यापनं कृत्स्नस्य वेदस्य । किं तु गृह्यमन्त्राणामेवेति ॥ ८ ॥

ततो यो निवर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे ॥९॥

ततः एवं कृतप्रायश्चित्तात् गृहस्थीभूताद्यो निवर्तते उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथम् ? यथा प्रथमेऽतिक्रमे ऋतुं त्रैविद्यकं ब्रह्मचर्यं चारयित्वेत्यर्थः ॥ ९ ॥

तत ऊर्ध्वं प्रकृतिवत् ॥ १० ॥

ततः यो निवर्तते तस्य प्रकृतिवत् यथा प्राप्तमुपनयनं कर्तव्यमिति । यस्य तु प्रपितामहस्य पितुरारभ्य नानुस्मर्यत उपनयनं तत्र प्रायश्चित्तं नोक्तम्, धर्मज्ञैरूहितव्यम् ॥ १० ॥

एवं ततः पूर्वेष्वपि निरूपितमुपनयनम्, अथाऽध्ययनविधिः—

उपेतस्याऽऽचार्यकुले ब्रह्मचारिवासः ॥ ११ ॥

एवं यथाविध्युपेतस्य ब्रह्मचारिणस्सत आचार्यकुले वासो भवति । ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी । अध्ययनाङ्गानि व्रतानि चरता आचार्यकुले वस्तव्यमित्युक्तं भवति ॥ ११ ॥

तत्र कालः—

(१)अष्टाचत्वारिंशद्वर्षाणि ॥ १२ ॥

चतुर्णां वेदानामध्ययनकाल एषः । प्रतिवेदं द्वादश ॥ १२ ॥

पादूनम् ॥ १३ ॥

स एव कालः पादूनं वा प्रत्येतव्यः । पादेनोनं पादूनम् । पररूपं (२)शकन्तवत् । षट्त्रिंशद्वर्षाणि । प्रतिवेदं नव ॥ १३ ॥

अर्धेन ॥ १४ ॥

ऊनमिति(३) समस्तमप्यपेक्षते । चतुर्विंशतिर्वर्षाणि । प्रतिवेदं षट् ॥१४॥

---

१. गोपथब्राह्मणेऽथर्ववेदीये द्वितीयप्रपाठके पञ्चमब्राह्मणेऽस्य विधिर्दृश्यते—"तस्मा एतत् प्रोवाचाष्टाचत्वारिंशद्वर्षं तच्चतुर्धा वेदेषु व्यूह्य द्वादशवर्षं ब्रह्मचर्यं; द्वादशवर्षाण्यवरार्धमपि स्नायंश्चरेद्यथा शक्त्यपरम्" ( गोप. ब्रा. पू. २. ५. ) इति ॥

२. 'शकन्ध्वादित्वात्' इति घ. पु. ।

३. उपसमस्तमिति ख० पु० प्राप्तसमासमपीत्यर्थः । सर्वत्राप्यपेक्षते इति. घ. पु.

## त्रिभिर्वा ॥ १५ ॥

पादैरूनमिति प्रकरणादवगम्यते । द्वादशवर्षाणि । प्रतिवेदं त्रीणि ॥१५॥

## द्वादशावरार्ध्यम् ॥ १६ ॥

अवरार्ध्यशब्दोऽवरमात्रेत्येतस्मिन्नर्थे वर्तते । द्वादशवर्षाणि अवरमात्रा यथा भवति तथा ब्रह्मचारिणा गुरुकुले वस्तव्यम् । पूर्वेणैव सिद्धे यो ब्रह्मचार्यतिमेधावितया चतुरोऽपि वेदानितोऽल्पीयसा कालेन गृह्णाति तेनाप्येतावन्तं कालं गुरुकुले वस्तव्यम् । (१)'विद्यया स्नाती'त्येतस्मिन्नपि पक्षे नातित्वरितेन स्नातव्यमित्येवमर्थमिदमारभ्यते । एतेन एकस्य वेदस्य त्रीणि वर्षाणि ब्रह्मचर्यमवश्यं(२) भावीत्यर्थात्सिद्धम् । मनुरप्याह—

(३)षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम् ।
तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥ इति ॥

त्रयाणां वेदानां षट् त्रिंशत्; एकैकस्य द्वादश । तदर्धिकं त्रयाणामष्टादश; एकैकस्य षट् । पादिकं वा त्रयाणां नव; एकैकस्य त्रीणि । ग्रहणान्तिकमेव वेति एकैकस्य त्रिभ्य ऊर्ध्वमनियमः, न प्रागित्यर्थो द्रष्टव्यः॥१६॥

## न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति ॥ १७ ॥

ब्रह्मचारिविद्यार्थशब्दयोरर्थ उक्तः । यो ब्रह्मचारी विद्यार्थी भवति न तेन दिवसमात्रमपि परस्य समीपे वस्तव्यम् । आचार्यस्य समीप एव वस्तव्यमित्युक्तं भवति । विद्यार्थस्येति वचनात् नैष्ठिकस्य कदाचिदन्यत्र (४)वासेऽपि न दोषः । यद्वा भोजननिवृत्तिरेवोपवासः । परलोकार्थ उपवासः परोपवासः स विद्यार्थस्य न भवति । नैष्ठिकस्य तु(५) दोषः । अत्र पक्षे(६)'आहिताग्निरनड्वांश्चे'ति विद्यार्थब्रह्मचारिविषयम् ॥१७॥

## अथ ब्रह्मचर्यविधिः ॥ १८ ॥

ब्रह्म वेदस्तदर्थं यद्व्रतं चरितव्यं तद्ब्रह्मचर्यं तदधिक्रियते ॥ १८ ॥

## आचार्याधीनस्स्यादन्यत्र पतनीयेभ्यः ॥ १९ ॥

"आचार्याधीनो भवे"त्युपनयनान्ते यत् संशासनं तस्मिन्नेवाचार्या-

---

१. आप० ध. १.३०.१.
२. भावीत्ययमर्थस्सिद्धः । इति ख० पु०
३. मनु० स्मृ० ३. १
४. वासो न दोषः इति क० पु०
५. न दोषः इति ख० पु०
६. आप० ध. २. ९.१३.

धीनताऽनूद्यते 'अन्यत्र पतनीयेभ्य' इति विशेषं वक्ष्यामीति।(१)पतनीय इति करणे कृत्प्रत्ययः। (२)अमुमरातिं ब्राह्मणमित्थं व्यापादयेत्याचार्येण चोदितोऽप्येवमादि न कुर्यादिति ॥ १९ ॥

हितकारी गुरोरप्रतिलोमयन्वाचा ॥ २० ॥

आचार्येण प्रयुक्तोऽप्यप्रयुक्तोऽपि तस्मै हितमेव कुर्यात्, वाचा (३)प्रातिलोम्यमकुर्वन् ॥ २० ॥

अधासनशायी ॥ २१ ॥

शयनं शायः। (४)'कृत्यल्युटो बहुल'मिति बहुलवचनात् घञ्। अधः आसनशायो यस्य सः अधासनशायी। गुरुसन्निधावध आसीत अधश्शयीतेत्युक्तं भवति। अधश्शब्दस्य सवर्णदीर्घश्छान्दसः, अपपाठो वा। तृणेषु प्रस्तरेषु चासनशयने शिष्टाचारसिद्धे ॥ २१ ॥

नानुदेश्यं भुञ्जीत ॥ २२ ॥

अनुदेश्यं श्राद्धार्थं देवतार्थं वा उद्दिष्टं न भुञ्जीत ॥ २२ ॥

तथा क्षारलवणमधुमांसानि ॥ २३ ॥

न भुञ्जीतेत्येव। (५)क्षारादीनि गृह्ये गतानि ॥ २३ ॥

अदिवास्वापी ॥ २४ ॥

न दिवा स्वप्यात् ॥ २४ ॥

अगन्धसेवी ॥ २५ ॥

चन्दनादीनि गन्धद्रव्याणि न सेवेत ॥ २५ ॥

मैथुनं न चरेत् ॥ २६ ॥

उपचारक्रिया केली स्पर्शो (६)भूषणवाससाम्।
एकशय्यासनं क्रीडा चुम्बनालिङ्गने तथा ॥

इत्यादेस्सर्वस्योपलक्षणं मैथुनग्रहणम् ॥ २६ ॥

---

१. करणे प्रत्ययः इति क० पु० २. अस्मदरातिं इति ख० पु०
३. प्रातिकूल्यं इति ख० पु० ४. पा० सू० ३. ३. ११३
५. क्षारपदार्थः आप. ध. २. १५. ११. सूत्रे व्याख्यास्यते।
६. भूषणवाससी. इति. क. पु.

उत्सन्नश्लाघः ॥ २७ ॥

श्लाघा शोभा सा उत्सन्ना यस्य स उत्सन्नश्लाघः ॥ एवंभूतो भवेत् । (१)प्रक्षणादिना मुखादिकं उज्वलं न कुर्यात् इति ॥ २७ ॥

अङ्गानि न प्रक्षालयीत ॥ २८ ॥

(२)विना शिरसा सुखार्थमुष्णोदकादिना शरीरं न प्रक्षालयेत् ॥२८॥

प्रक्षालयीत त्वशुचिलिप्तानि(३) गुरोरसन्दर्शे ॥२९॥

यानि तु मूत्रपुरीषाद्यशुचिलिप्तान्यङ्गानि तानि कामं(४) मृदाद्भिः प्रक्षालयेत् यावद्गन्धो लेपश्चापैति । तदपि गुरोरसन्दर्शे(५) यत्र स्थितं गुरु र्न पश्यति तत्र । आचार्यप्रकरणे गुरुग्रहणात् पित्रादीनामपि ग्रहणम् ॥ २९ ॥

(६) नाप्सु श्लाघमानः स्नायाद्यदि
स्नायाद्दण्डवत्प्लवेत् ॥ ३० ॥

स्नाने प्राप्ते न श्लाघमानः स्नायात् । किं तु दण्डवत्प्लवेदित्युक्तम् । स्नानीयैर्मलापकर्षणं श्लाघा; क्रीडा वा जले । अपर आह—'अङ्गानि न प्रक्षालयीते'(सू.२८)त्यासमावर्तनान्नित्यस्नानस्य प्रतिषेधः । 'प्रक्षालयीत त्वशुचिलिप्तानी'(सू.२९)ति नैमित्तिकस्य विधिः । 'नाप्सु श्लाघमानः स्नाया'(सू.३०)दिति तत्रैव श्लाघाप्रतिषेध इति ॥ ३० ॥

जटिलः ॥ ३१ ॥

सर्वानेव केशान् जटां कृत्वा बिभृयात् ॥ ३१ ॥

शिखाजटो वा वापयेदितरान् ॥ ३२ ॥

अथवा शिखामेव जटां कृत्वा इतरान्केशान् वापयेत् नापितेन ॥ ३२ ॥

---

१. मृत्कल्कादिना इति क० पु०

२. स्नानसमये आमलकादिभिर्न क्षालयेत । इति क० पु०

३. गुरोरसन्दर्शने इति क० पु० ४. मृद्वारिभिः इति ख० पु०

५. यत्र गुरुर्न पश्यति तत्र । इति ख० पु० 'यत्र लिप्तं गुरुः' इति ग. पु०

६. नाप्सु श्लाघमानस्स्नायादित्येतावदेव ख० पु० सूत्रम् । "अथाद्भिश्श्लाघमानो न स्नायात् तेन तां श्लाघामवरुन्धे" ( गो. ब्रा. पू. १.२. ) इति गोपथब्राह्मणम् ॥

**मौञ्जी मेखला त्रिवृद्ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम् ॥ ३३ ॥**

मुञ्जानां विकारो मौञ्जी । त्रिवृत् त्रिगुणा । एवम्भूता ब्राह्मणस्य मेखला भवति । सा च शक्तिविषये शक्तौ सत्यां दक्षिणावृत्तानां प्रदक्षिणावृत्तानां कर्तव्या । तद्धितार्थे गुणभूतानामपि मुञ्जानामेवैतद्विशेषणम् ॥ ३३ ॥

**ज्या राजन्यस्य ॥ ३४ ॥**

स्पष्टम् ॥ ३४ ॥

**मौञ्जी वाऽयोमिश्रा ॥ ३५ ॥**

अथवा अयोमिश्रा क्वचित्तु कालायसेन बद्धा मौञ्जी मेखला भवति राजन्यस्य ॥ ३५ ॥

**आवीसूत्रं वैश्यस्य ॥ ३६ ॥**

अविरूर्णायुः कम्बलप्रकृतिः तत्सम्बन्धिनी ऊर्णा आवी तत्कृतं सूत्रं आवीसूत्रम् । सा मेखला वैश्यस्य भवति ॥ ३६ ॥

**सैरी तामली वेत्येके ॥ ३७ ॥**

सैरी सीरा बाहयोक्त्ररज्जुः । (१)तामलो मूलोदसंकाशो वृक्षः तस्य त्वचा ग्रथिता तामली ॥ ३७ ॥

**पालाशो दण्डो ब्राह्मणस्य नैयग्रोधस्कन्धजोऽवा(२)ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥ ३८ ॥**

पालाशो दण्ड इत्यादि गृह्ये(३)गतम् ॥ ३८ ॥

**वासः ॥ ३९ ॥**

वस्यते कौपीनमाच्छाद्यते येन तद्वासः । तद्वक्ष्यते ॥ ३९ ॥

**शाणीक्षौमाजिनानि ॥ ४० ॥**

---

१. तमालादण् तमालसंज्ञो वृक्षः तस्य० इति घ. पु.

२. अवाङ्ग्रः' इति क. पु. ३. आप० गृ. ११. १५.

शणस्य विकारः शाणी पटी। क्षुमा अतसी तस्या विकारः क्षौमम्। श्वेतपट्टाख्यवासोविशेष इत्यन्ये। अजिनं यस्य कस्यचिन्मेध्यस्य पशोः। त्रीण्येतानि वर्णानुपूर्व्येण वासांसि ॥ ४० ॥

काषायं चैके वस्त्रमुपदिशन्ति ॥ ४१ ॥

एके आचार्या वस्त्रं त्ववधेधार्यमुपदिशन्ति। वस्त्रं कार्पासम्। तच्च काषायं कषायेण रक्तम्। ब्राह्मणस्यैवेत्यर्थाद्गम्यते। इतरयोर्वक्ष्यमाणत्वात् ॥४१॥

इत्यापस्तम्बधर्मसूत्रे प्रथमप्रश्ने द्वितीया कण्डिका ॥ २ ॥

---

माञ्जिष्ठं राजन्यस्य ॥ १ ॥

मञ्जिष्ठया रक्तं माञ्जिष्ठम् ॥ १ ॥

हारिद्रं वैश्यस्य ॥ २ ॥

हरिद्रया रक्तं हारिद्रम् ॥ २ ॥

हारिणमैणेयं वा कृष्णं ब्राह्मणस्य ॥ ३ ॥

एतान्युत्तरीयाणि। 'बस्ताजिन' मिति वक्ष्यमाणत्वात् इहाप्यजिनमिति गम्यते। (१)अजिनमुत्तरमुत्तरये' त्युपनयने यदजिनमुक्तं धार्यं तद्धारिणं ब्राह्मणस्य; हरिणो मृगस्तस्य विकारः हारिणम्। ऐणेयं वा कृष्णम्। एणी मृगी तस्या विकार ऐणेयम्। (२)एण्या ढञ्। द्विविधा एण्यः कृष्णाश्च गौराश्च। अतो विशेष्यते—कृष्णमैणेयमिति ॥ ३ ॥

अस्मिन् पक्षे विशेषमाह—

कृष्णं चेन्नानुपस्तीर्णासनशायी स्यात् ॥ ४ ॥

कृष्णं चेद्विभृयात् न हारिणं ततस्तस्मिन्ननुपस्तीर्णे नासीत, न च शयीत। अयं तावदर्थः। शब्दनिर्वाह (३)'स्तवधासनशायी'त्यत्र कृतः ॥४॥

रौरवं राजन्यस्य ॥ ५ ॥

रुरुर्बिन्दुमान्मृगः ॥ ५ ॥

बस्ताजिनं वैश्यस्य ॥ ६ ॥

बस्तश्छागः ॥ ६ ॥

---

१. आपगृ० ११. ११. २. पा. सू. ४. ३. ५९. ३. आप० ध० १. २. २१.
आप० ध० ३

**आविकं सार्ववर्णिकम् ॥ ७ ॥**

अविरूर्णायुः। स एवाऽऽविकः। तस्य चर्माऽऽविकं, तत्सर्वेषामेव वर्णानाम्। अस्य हारिणादिभिर्विकल्पः ॥ ७ ॥

**कम्बलश्च ॥ ८ ॥**

अयमप्याविक एव। प्रावरणमेव सर्वेषाम् ॥ ८ ॥

'काषायं चैके वस्त्रमुपदिशन्ती' त्यारभ्य वासांस्यजिनानि च विहितानि। तत्र कामवशेन विशेषमाह—

**ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत, क्षत्रवृद्धिमिच्छन् वस्त्राण्येव, उभयवृद्धिमिच्छन्नुभयमिति हि(१) ब्राह्मणम् ॥ ९ ॥**

ब्रह्मवृद्धिः ब्राह्मणवृद्धिः क्षत्रवृद्धिः क्षत्रियवृद्धिः ॥ ९ ॥

अथ स्वपक्षमाह—

**अजिनं त्वेवोत्तरं धारयेत् ॥ १० ॥**

उत्तरमुत्तरीयम्। तदजिनमेव धारयेत् ॥ १० ॥

**(२)अनृत्तदर्शी ॥ ११ ॥**

नृत्तं न पश्येत् ॥ ११ ॥

**सभाः समाजांश्चाऽगन्ता ॥ १२ ॥**

द्यूतादिस्थानं सभा। उत्सवादिषु समवायः समाजः। तास्सभास्समाजांश्च अगन्ता ताच्छील्येन न गच्छेत्। यदृच्छया गमने न दोषः ॥ १२॥

**अजनवादशीलः ॥ १३ ॥**

जनवादः परिवादः लोकवार्ता वा, तच्छीलो न स्यात् ॥ १३ ॥

**रहश्शीलः ॥ १४ ॥**

---

१. अत्र गोपथब्राह्मणस्य प्रथमप्रपाठकस्य द्वितीया कण्डिका द्रष्टव्या।

२. इमे नियमा गोपथब्राह्मणे विहिताः "नोपरिशायी स्यान्न गायनो न नर्तनो न सरणो न निष्ठीवेत् यदुपरिशायी भवत्यभीक्ष्णं निवासा जायन्ते, यद्गायनो भवत्यभीक्ष्णश आक्रन्दान् धावन्ते, यन्नर्तनो भवत्यभीक्ष्णशः प्रेतान्निर्हरन्ते, यत्सरणो भवत्यभीक्ष्णशः प्रजास्संविशन्ते, यन्निष्ठीवति मध्य एव तदात्मनो निष्ठीवति" इति। गो. ब्रा. १. २. ७.

सति सम्भवे रहःशीलः स्यात् ॥ १४ ॥

गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि ॥ १५ ॥

येषु प्रदेशेषु गुरुरुदाचरति पौनःपुन्येन चरति तेषु स्वैरिकर्माणि मैत्रप्रसाधनादीनि न कुर्यात् ॥ १५ ॥

स्त्रीभिर्यावदर्थसम्भाषी ॥ १६ ॥

स्त्रीभिस्सह(१)यावत्प्रयोजनं तावदेव सम्भाषेत । न प्रसक्तानुप्रसक्तमतिचिरम् । (२) 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षती'ति । अतिबालाभिरतिवृद्धाभिश्च न दोषः ॥ १६ ॥

मृदुः ॥ १७ ॥

क्षमावान् । १७ ॥

शान्तः ॥ १८ ॥

इन्द्रियाणामसद्विषये प्रवृत्त्यभावः शमः तद्वान् शान्तः ॥ १८ ॥

दान्तः ॥ १९ ॥

विहितेषु कर्मस्वग्लानिर्दमः । तद्वान् दान्तः ॥ १९ ॥

ह्रीमान् ॥ २० ॥

ह्रीर्लज्जा तद्वान् ॥ २० ॥

दृढधृतिः ॥ २१ ॥

लब्धे नष्टे मृते वा धृतावेवावस्थितः स्यात् न हृष्येत् न वाविषीदेत्॥

अग्लाँस्नुः ॥ २२ ॥

उत्साहसम्पन्नः । (३)'ग्लाजिस्थश्च ग्स्नुः' । अत्रानुस्वारः छान्दसोऽपपाठो वा ॥ २२ ॥

अक्रोधनः ॥ २३ ॥

न कस्मैचिदपि कुप्येत् ॥ २३ ॥

अनसूयुः ॥ २४ ॥

पराभ्युदयानुसन्तापः असूया । तच्छीलो न स्यात् ॥ २४ ॥

---

१. यावत्प्रयोजनमेव. २. मनु. स्मृ.२. २१५. ३. पा. सू. ३. २. १३९.

**सर्वं लाभमाहरन् गुरवे सायं प्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्षमाणोऽन्यत्राऽपपात्रेभ्योऽभिशस्ताच्च ॥२५॥**

अपपात्राः प्रतिलोमजा रजकादयः। अपगतानि हि तेषां पात्राणि पाकाद्यर्थानि चतुर्भिर्वर्णैस्सह। अभिशस्तान् वक्ष्यति 'अथ पतनीयानी' त्यादिना। तानुभयान् वर्जयित्वा अन्यत्र भिक्षेत। तत्र भिक्षमाणस्सर्वं लाभं यच्च यावच्च लब्धं गोहिरण्यादि तत्सर्व(१)ममायया गुरवे आहरेत्। एवमहरहः कुर्वन् सायं प्रातरमत्रेण न हस्तादिना भिक्षाचर्यं भिक्षाचरणं चरेत् कुर्यात्। 'सायं प्रात' रिति वचनान्न सायं गृहीतेन प्रातराशः, नापि प्रातर्गृहीतेन सायमाशः॥ २५॥

अथ भिक्षाप्रत्याख्यानं निन्दितुं ब्राह्मणमाकृष्यते—

**स्त्रीणां प्रत्याचक्षाणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते। तस्मादु ह वै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीतापि हैष्वेवंविध एवंव्रतः स्यादिति हि(२) ब्राह्मणम्॥ २६॥**

व्याख्यातः समाहितः। समाहितो ब्रह्मचारी याभिः स्त्रीभिः भिक्षमाणः प्रत्याख्यायते तासां प्रत्याचक्षाणानां स्त्रीणामिष्टं यागैरार्जितं धर्मं, दत्तं दानेनार्जितं हुतं दर्विहोमैश्च गार्ह्यैरार्जितं सर्वमेव धर्मं वृङ्क्ते आच्छिनत्ति; यस्मादेवं तस्मात् ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीत। उ ह वा इति निपाता वाक्यालङ्कारार्थाः। अपिहशब्दौ कदाचिदित्येतमर्थं द्योतयतः। एषु सङ्घीभूतेषु ब्रह्मचारिषु कदाचिदेवंविधः समाहित एवंव्रतः 'अथ ब्रह्मचर्याविधि' रित्यारभ्य यान्युक्तानि तद्वान् ब्रह्मचारी स्यात्। (३)सम्भावने लिङ्। सम्भवेत्। तस्मान्न प्रत्याचक्षीतेत्येवं ब्राह्मणं भवतीति॥२६॥

**नानुमानेन भैक्षमुच्छिष्टं दृष्टश्रुताभ्यां तु॥ २७॥**

---

१. अमाययेति. नास्ति क. पु. सर्वमादाय इति ग. पु.

२. "ते देवा अब्रुवन् ब्राह्मणो वा अयं ब्रह्मचर्यं चरिष्यति ब्रूतास्मै भिक्षा इति गृहपतिर्ब्रूत बहुचारी गृहपत्न्या इति किमस्या वृञ्जीताददत्या इति, इष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति, तस्मात् ब्रह्मचारिणेऽहरहर्भिक्षां गृहिणीसामेयुरिष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति" इति गोपथब्राह्मणम्। (गो. ब्रा. १. २, ६)

३. सम्भावनायां लिङ्. इति. ख. पु.

भिक्षाणां समूहो भैक्षम् । न तल्लिङ्गाभासेनोच्छिष्टं मन्तव्यम् । किंतु दृष्टश्रुताभ्यामेव । दृष्टमात्मनः प्रत्यक्षम् । श्रुतमाप्तोपदेशः । ताभ्यामेव तदुच्छिष्टमवगन्तव्यम् । अयमंशः प्राप्तानुवादोऽपूर्वमंशं विधातुम् । यथा(१)'नानुवषट्करोति, अपि वोपांश्वनुवषट्कुर्यात्' इति ॥ २७ ॥

(२)भवत्पूर्वया ब्राह्मणो भिक्षेत ॥ २८ ॥

ब्राह्मणो ब्रह्मचारी भवत्पूर्वया वाचा भिक्षेत भिक्षां याचेत—'भवति भिक्षां देही' ति ॥ २८ ॥

भवन्मध्यया राजन्यः ॥ २९ ॥

'भिक्षां भवति देही'ति राजन्यो भिक्षेत ॥ २९ ॥

भवदन्त्यया वैश्यः ॥ ३० ॥

'भिक्षां देहि भवती'ति ॥ ३० ॥

'सर्वं लाभमाहरन् गुरव' इत्युक्तम् । अथाऽऽहृतं किं कर्तव्यमित्यत आह—

तत्समाहृत्योपनिधायाऽऽचार्याय प्रब्रूयात् ॥३१॥

तत् भैक्षं समाहृत्य समीपे निधायाचार्याय प्रब्रूयात्—इदमित्थमाहृतमिति॥३१॥

तेन प्रदिष्टं भुञ्जीत ॥ ३२ ॥

तेन ह्याचार्येण प्रदिष्टं सौम्य त्वमेव भुङ्क्ष्वेत्युक्तं भुञ्जीत ॥ ३२ ॥

विप्रवासे गुरोराचार्यकुलाय ॥ ३३ ॥

यदि गुरुर्विप्रोषितोऽसन्निहितः स्यात् तत् आचार्यकुलायाऽऽचार्यस्य यत्कुलं भार्यापुत्रादि तस्मै ब्रूयात् । तेन प्रदिष्टं भुञ्जीत ॥ ३३ ॥

तैर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः ॥ ३४ ॥

तैस्स्वकुल्यैस्सह गुरोः विप्रवासे अन्येभ्योऽपि "(३)श्रोत्रियेभ्यः प्रब्रूयात् । तैः प्रदिष्टं भुञ्जीतेति विपरिणामेनान्वयः । गौतमोऽप्याह(४) "असन्निधौ तद्भार्यापुत्रसब्रह्मचारिभ्यः' इति ॥ ३४ ॥

नाऽऽत्मप्रयोजनश्चरेत् ॥ ३५ ॥

---

१. आप. श्रौ. १३. १४. ९, १०. सोमयागे पात्नीवतग्रहे प्राप्तस्याप्यनुवषट्कारनिषेधस्य उपांश्वनुवषट्कारविधानार्थं नानुवषट्करोतीत्यनुवादः ।

२. इतः सूत्रत्रयमेकीकृतं ग. पुस्तके ।

३ श्रोत्रियपदार्थः आप, ध. २. ४. ६ सूत्रे द्रष्टव्यः । ४. गौ. ध. २. ४०.

आत्मा प्रयोजनं प्रयोजकः यस्य स आत्मप्रयोजनः । एवंभूतो भिक्षां न चरेत् आत्मार्थं न चरेदित्यर्थः । अस्य प्रयोजनं यदा श्रोत्रिया अपि न लभ्यन्ते तदा(१)'प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीते'ति वक्ष्यमाणमप्रोषितेऽपि यथा स्यादिति ॥ ३५ ॥

भुक्त्वा स्वयममत्रं प्रक्षालयीत ॥ ३६ ॥

अमत्रं भोजनपात्रम्, भुक्त्वेति सन्निधानात् । तत्स्वयमेव प्रक्षालयीत प्रक्षालयेत् । भिक्षापात्रस्य त्वन्येन प्रक्षालने न दोषः । उभयोरपि पात्रयोर्ग्रहणमित्यन्ये ॥ ३६ ॥

न चोच्छिष्टं कुर्यात् ॥ ३७ ॥

यावच्छक्नोति भोक्तुं तावदेव भोजनपात्रे कृत्वा भुञ्जीत ॥ ३७ ॥

अशक्तौ भूमौ निखनेत् ॥३८॥

भोजने प्रवृत्तो यदि तावद्भोक्तुं न शक्नुयात् तदा तदन्नं भूमौ निखनेत् ॥ ३८ ॥

अप्सु वा प्रवेशयेत् ॥ ३९ ॥

अप्सु प्रक्षिपेत् ॥ ३९ ॥

आर्याय वा पर्यवदध्यात् ॥ ४० ॥

आर्यस्त्रैवर्णिकः तस्मै अनुपनीताय पर्यवदध्यात् सर्वमेकस्मिन्पात्रेऽवधाय तत्समीपे भूमौ स्थापयेत् ॥ ४० ॥

अन्तर्धिने वा शूद्राय ॥ ४१ ॥

अन्तर्धानमन्तर्धिः सोऽस्यास्तीति । व्रीह्यादित्वादिनिः । अन्तर्धी दासः । अन्तर्हितं हि तस्य शूद्रत्वम्, आशौचेषु स्वामितुल्यत्वात् । प्रकरणादाचार्यस्येति गम्यते । आचार्यदासाय वा शूद्राय पर्यवदध्यात्४१॥

प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत ॥ ४२ ॥

यदि शिष्य आचार्यार्थमात्मार्थं वा प्रोषितः स्यात् तदा भैक्षात् किञ्चिदादायाग्नौ कृत्वा प्रक्षिप्य शेषं भुञ्जीत श्रोत्रियाणां सद्भावे असद्भावे च । 'अन्येभ्योऽपि श्रोत्रियेभ्य'(२) इत्येतन्न भवति । यदि स्यात्तत्रैवायं ब्रूया 'त्तदभावेऽग्नौ कृत्वा भुञ्जीते' ति । यद्यपि तत्राचार्यस्य प्रवासः

१. आप. ध. १. ३. ४२ २. इत्येतत्त्वत्र न भवति. इति ख. पु.

प्रकृतः, तथापि न्यायसाम्याच्छिष्यस्यापि विप्रवासे भविष्यति ॥ ४२ ॥

अथ ब्रह्मचारिणो यज्ञं विधातुं हविरादीनि सम्पादयति—

**भैक्षं हविषा संस्तुतं तत्राऽऽचार्यो देवतार्थे ॥ ४३ ॥**

भैक्षं हविष्येन संस्तुतं कीर्तितम् । तत्र तस्मिन् हविषि आचार्यो देवतार्थे देवताकार्ये तत्प्रीत्यर्थत्वात्तस्य ॥ ४३ ॥

**आहवनीयार्थे च ॥ ४४ ॥**

तस्य जाठराग्नौ हूयमानत्वात् ॥ ४४ ॥

**तं भोजयित्वा ॥ ४५ ॥**

इति प्रथमप्रश्ने तृतीया कण्डिका ।

---

**यदुच्छिष्टं प्राश्नाति ॥ १ ॥**

अनुवादेषु सर्वत्र विधिः कल्प्यते । तं भोजयेत् । भोजयित्वा तस्योच्छिष्टं प्राश्नीयात् प्राश्नाति । नकारोऽपाठश्छन्दसो वा, 'शादि'ति चुत्वप्रतिषेधात् ॥ ४५ ॥ १ ॥

**हविरुच्छिष्टमेव तत् ॥ २ ॥**

इडाभक्षणादिस्थानीयमित्यर्थः ॥ २ ॥

**यदन्यानि द्रव्याणि यथालाभमुपहरति**
**दक्षिणा एव ताः ॥ ३ ॥**

यदन्यानि द्रव्याणि गवादीनि भिक्षाचरणे लब्धानि समिदादीनि च स्वयमाहृतानि यथालाभमुपहरति दक्षिणा एव ताः । दक्षिणासामानाधिकरण्या-त्ता इत्युक्तम् ॥ ३ ॥

**स एष ब्रह्मचारिणो यज्ञो नित्यप्रततः ॥ ४ ॥**

स एष एवंभूतो यज्ञः ब्रह्मचारिणो नित्यं प्रतायते । एवं कुर्वता ब्रह्मचा-रिणा यज्ञ एव नित्यं क्रियत इत्यर्थः ॥ ४ ॥

**न चास्मै श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्यात् ॥ ५ ॥**

अस्मै शिष्याय आचार्यः श्रुतिविप्रतिषिद्धं शास्त्रविप्रतिषिद्धमुच्छिष्टं न दद्यात् ॥ ५ ॥

किं पुनस्तत्—

यथा क्षारलवणमधुमांसानीति ॥ ६ ॥

यथेतिवचना'च्छ्रुतिविप्रतिषिद्ध'मिति लक्षणतः प्रतिषेधाच्च क्षारादिग्रहणमेवंविधस्योपलक्षणम् ॥ ६ ॥

एतेनान्ये नियमा व्याख्याताः ॥ ७ ॥

अभ्यङ्गशेषो गन्धशेषो माल्यशेष इत्यादयो ब्रह्मचारिणः प्रतिषिद्धा आचार्येण न देया इत्युक्तं भवति ॥ ७ ॥

केचित्तु श्रुतिविप्रतिषिद्धमाचार्यशेषमुपयुञ्जाना दृश्यन्ते पूर्वैः पूर्व आचारः प्रमाणमिति वदन्तः । तान्निराकरोति—

श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥ ८ ॥

अनुमानाय प्रभवतीत्यानुमानिकः । आचाराद्धि श्रुतिः स्मृतिर्वाऽनुमीयते । तस्मादानुमानिकादाचारात्प्रत्यक्षश्रुतिर्बलीयसी । तद्विरोधे तु नानुमातुं शक्यते,(१) 'अनुमानमबाधितम्' इति न्यायात् । एवं च ब्रुवता ब्रह्मचारिणः क्षारलवणादिप्रतिषेधः प्रत्यक्षब्राह्मणमूल इति दर्शितं भवति । यद्यपि क्षारादिप्रतिषेधश्रुतेरुच्छिष्टव्यतिरिक्तो विषयः सम्भवति तथापि सङ्कोचोऽपि तस्या अविशेषप्रवृत्ताया आनुमानिकादाचाराद्युक्तः॥ ८ ॥

ननु परस्परविरुद्धा अपि श्रुतय उपलभ्यन्ते(२) 'गृह्णाति, न गृह्णाती'ति । तत्किमाचारात् सङ्कोचिका श्रुतिर्नानुमीयते ? अत आह—

दृश्यते चापि प्रवृत्तिकारणम् ॥९॥

स्यादेव यद्ययमाचारोऽगृह्यमाणकारणः स्यात् । गृह्यते तु तत्र कारणम् ॥ ९ ॥

किं तत् ?

प्रीतिर्ह्युपलभ्यते ॥ १० ॥

क्षारादिभोजने भुञ्जानस्य प्रीतिर्भवति । ततश्च यत्र प्रीत्युपलब्धितः

---

१. अनुमानबाधितं इति न्यायात्, इति. क. पु.

२. अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति. इति श्रुतिभ्यामेकस्मिन्नेवातिरात्रसंस्थाके ज्योतिष्टोमे षोडशिसंज्ञस्य ग्रहस्य ग्रहणाग्रहणयोः परस्परविरुद्धयोर्विधानात् तयोरपि श्रुत्योः परस्परं विरोधादिति भावः । उलूखलाकार उपर्यासेचनवान् पात्रविशेषो ग्रहः । खदिरवृक्षनिर्मितो ग्रहविशेषष्षोडशी । तस्य सोमरसेन पूरणं ग्रहणम् ।

प्रवृत्तिर्न तत्र शास्त्रमस्ति। तदनुवर्तमाना नरकाय राध्यतीति न्यायान्न सङ्कोचिका श्रुतिरनुमीयते इति ॥ १० ॥

पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम् ॥ ११ ॥

(१)स्पष्टम् ॥ ११ ॥

धर्मविप्रतिपत्तावभोज्यम् ॥ १२ ॥

यदि तयोर्धर्माद्विप्रतिपत्तिरपायो भवति ततो न भोज्यम्। यद्वा भुञ्जानस्य ब्रह्मचारिणो धर्मविप्रतिषेधो भवति मधुमांसादिमिश्रत्वेन ततो न भोज्यमिति ॥ १२ ॥

सायं प्रातरुदकुम्भमाहरेत् ॥ १३ ॥

आचार्यस्य स्नानपानार्थम् ॥ १३ ॥

(२)सदाऽरण्यादेधानाहृत्याऽधो निदध्यात् ॥ १४ ॥

सदा प्रत्यहमरण्यात् न पित्रादिगृहात् एधान् काष्ठानि आचार्यगृहे पाकाद्यर्थमाहरेत् आहृत्य चाऽधो निदध्यात् अधोनिधानमाचार्यपुत्रादिषु बालेषु पतनशङ्कया। अपर आह—आत्मनस्समिदाधानार्थ(३)मेधोहरणमिति। उक्तं गृह्ये—(४)'एवमन्यस्मिन्नपि सदाऽरण्यादेधानाहृत्य। इति। तदनुवादनाधोनिधानं विधीयते दृष्टार्थमदृष्टादृष्टार्थं वेति ॥ १४ ॥

नास्तमिते समिद्धारो गच्छेत् ॥ १५ ॥

अस्तमित आदित्ये समिध आहर्तुं न गच्छेत्; चोरव्याघ्रादिसम्भवात्। समिद्धार' इति(५)'अण् कर्मणि च' ति तुमर्थेऽण्प्रत्ययः ॥ १५ ॥

अग्निमिध्वा परिसमूह्य समिध आदध्यात्सायंप्रातर्यथोपदेशम् ॥ १६ ॥

परिसमूहनं परितो मार्जनम्। विप्रकीर्णस्याग्ने(६)रेकीकरणमित्यन्ये। यथोपदेशं यथा गृह्य उक्तं तथा समिध आदध्यात्। गृह्ये विहितमपि स-

---

१. स्पष्टोऽर्थः इति॰ ग॰ पु॰

२. "तस्मात् ब्रह्मचार्यहरहस्समिध आहृत्य सायं प्रातरग्निं परिचरेत्, नोपर्युपसादयेत्, अधः प्रतिष्ठापयेत्" ( गोप. १. २. ६. ) इति गोपथब्राह्मणम ॥

३. इध्माहरणं इति क. ख. पु. ४. आप॰ गृ॰ ११. २२.

५. पा॰ सू॰ ३. ३. १२. ६. राशीकरणमित्यन्ये इति ख॰ ग॰ पु॰

मिदाधानं विधीयते सर्वाचरणार्थम्। सायं प्रातरित्यादिकान्विशेषान् वक्ष्यामीति च ॥ १६ ॥

सायमेवाऽग्निपूजेत्येके ॥ १७ ॥

एके आचार्यास्सायमेवाग्निपूजा कार्या, न प्रातरिति मन्यन्ते ॥ १७ ॥

समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या ॥ १८ ॥

समिदाधाने समिद्धमग्निं पाणिनैव परिसमूहेत्, न समूहन्या। समूहनी सम्मार्जनी दर्भनिर्मिता वेदाकृतिः, आचारात् ॥ १८ ॥

प्राक्तु याथाकामी ॥ १९ ॥

प्राक्समिदाधानात् परिसमूहने याथाकामी भवति। यथाकामस्य भावो याथाकामी। ष्यञ्, षित्वादीकारः ॥ १९ ॥

नाऽग्न्युदकशेषेण वृथाकर्माणि कुर्वीताऽऽचामेद्वा ॥२०॥

अग्निपरिचर्यायां परिसमूहने परिषेचने च यदुपयुक्तमुदकं, तच्छेषेण वृथाकर्माणि अदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत। नाऽप्याचामेत्। अवृथाकर्मत्वादस्य पुनःप्रतिषेधः ॥ २० ॥

पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाऽऽचामेत् ॥ २१ ॥

पाणिसंक्षुब्धं (१)पाणिना संक्षोभितं तेनोदकेन नाऽऽचामेत्। इदं तटाकादिषु स्वयमाचमने। यदा पर आचामयति, तदैकेन पाणिना यदावर्जितं तेन नाऽऽचामेत्। किं तु उभाभ्यां हस्ताभ्यां करकादि गृहीत्वा यदावर्जितमुदकं, तेनैवाऽऽचामेत्। एवं च स्वयं वामहस्तावर्जितेनापि नाचामेत्। (अलाबुपात्रेण नालिकेरजेन वैणवेन चर्ममयेन ताम्रमयेन वा पात्रेण स्वयमाचमनमाचरन्ति शिष्टाः) ॥ २१ ॥

स्वप्नं च वर्जयेत् ॥ २२ ॥

पूर्वं 'मदिवास्वापी' (१. २. २८)त्यनेन (२)दिवास्वापः प्रतिषिद्धः। अनेन रात्रावपि यावदाचार्यो न स्वपिति, तावन्तं कालं स्वापः प्रतिषि-

१. कुम्भादिगतमित्यधिकं घ. पु. ( ) एतच्चिन्हान्तर्गतो भागः ख० पुस्तके नास्ति।
२. दिवास्वापप्रतिषेधः इति. क. पु.

ध्यते । स्वप्नकथनं वर्जयेदित्येके ॥ २२ ॥

**अथाऽहरहराचार्यं गोपायेद्धर्मार्थयुक्तैः कर्मभिः ॥ २३ ॥**

अथ स्वप्नस्य प्रकृतत्वात् स्वप्नानन्तरं ब्राह्मे मुहूर्ते उत्थायेत्यर्थः । अहरहः नित्यमाचार्यं गोपायेत् रक्षेत् । किं दण्डादि गृहीत्वा ? नेत्याह—धर्मार्थयुक्तैः कर्मभिः । धर्मयुक्तानि कर्माणि समित्कुशपुष्पाहरणादीनि, अर्थयुक्तानि (१)युग्यघासाहरणादीनि ॥ २३ ॥

**(२) स गुप्त्वा संविशन् ब्रूया 'द्धर्म गोपाय माजूगुपमह'मिति ॥ २४ ॥**

स(३)ब्रह्मचारी धर्मार्थयुक्तैः कर्मभिर्यावदुत्थानात् यावदस्य संवेशनात् एवमाचार्यं गुप्त्वा संविशन् शयनं भजन् (४)'धर्मगोपायमाजूगुपमह' मितीमं मन्त्रं ब्रूयात् । धर्मं गोपायतीति धर्मगोपायः आचार्यः तमहमाजूगुपमाभिमुख्येन रक्षितवानस्मि, इदानीं तु संविशामीति मन्त्रार्थः ।

अपर आह—हे धर्म मा मां गोपाय रक्ष यस्मादहं आजूगुपमहमाचार्यमेतावन्तं कालमिति ॥ २४ ॥

**प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत् ॥ २५ ॥**

प्रमादोऽनवधानम् । प्रमादात् बुद्धिपूर्वं यो आचार्यस्य वा नियमातिक्रमस्तं रहसि बोधयेत् । इत्थमयं नियमः पूज्यपादैरतिक्रम्यते इति ॥ २५ ॥

**अनिवृत्तौ स्वयं कर्माण्यारभेत ॥ २६ ॥**

यदि बोधितोऽप्याचार्यस्ततो न निवर्तते, ततः स्वयमेव तस्य कर्तव्यानि ब्रह्मयज्ञादीनि कर्माण्यारमते कुर्यात् ॥ २६ ॥

**निवर्तयेद्वा ॥ २७ ॥**

---

१. एधसां हरणादीनि इति घ. पु.

२. "स यदहरहराचार्यकुलेऽनुष्ठिते सोऽनुष्ठाय ब्रूयात्-धर्मगुप्तो मा गोपायेति धर्मो हैनं गुप्तो गोपायेति" इति गोपथब्राह्मणम् ( गो. ब्रा. १. २. ४. )

३. न्याय्यादुत्थानान्न्याय्याच्च संवेशनात्. इति क. ख. पु. अन्यायात्''''''दन्याय्याच्च''''''इति. ङ. पु.

४. यावदुपात्त एवायं मन्त्रः ।

प्रसह्य वा स्वयं निवर्तयेत् । पित्रादिभिर्वा निवर्तयेत् ॥ २७ ॥

**अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति ॥ २८ ॥**

यः पूर्वमाचार्यादुत्तिष्ठति प्रतिबुध्यते । जघन्यशब्दः पश्चादर्थे । जघन्यश्च संविशति, तं ब्रह्मचारिणं न स्वपितीति धर्मज्ञा आहुः । प्रयोजनमुपनयने 'मा सुषुप्था' इति संशासनस्यायमर्थः, न स्वापस्यात्यन्ताभाव इति । अथशब्दश्च वाक्योपक्रमे ॥ २८ ॥

**स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवाप्तानि भवन्ति यान्यपि गृहमेधे ॥२९॥**

'आचार्याधीनः स्या' दित्यारभ्य यस्य नियमा उक्ताः, स ब्रह्मचारी, एवमुक्तेन प्रकारेण, प्रणिहितात्मा प्रकर्षेण निहित आचार्यकुले स्थापित आत्मा येन स तथोक्तः । प्रकर्षश्च(१)आत्मनस्तत्रैव शरीरन्यासः । वक्ष्यति (२)आचाचार्यकुले शरीरन्यासः " इति । अस्यैवंविधस्य ब्रह्मचारिणः अत्रैव ब्रह्मचर्याश्रमे सर्वाणि फलवन्ति ज्योतिष्टोमादीनि कर्माण्यवाप्तानि भवन्ति । तत्फलावाप्तिरेव तदवाप्तिः । यान्यपि कर्माणि गृहमेधे गृह्यशास्त्रे विवाहाद्यष्टकान्तानि, तान्यवाप्तानि भवन्ति । तदेवं नैष्ठिकब्रह्मचारिविषयमिदं सूत्रम् ॥ २९ ॥

इत्यापस्तम्बीये धर्मसूत्रे चतुर्थी कण्डिका ॥ ४ ॥

इत्यापस्तम्बधर्मसूत्रवृत्तौ(३) हरदत्तविरचितयामुज्वलायां प्रथमप्रश्न प्रथमः पटलः ॥ १ ॥

---

१. आन्तात्तत्रैव शरीरन्यासः इति ख. पु. अन्ततस्तत्रैव, इति, घ. पु.

२. आप. ध. २. २१. ६. ३. हरदत्तमिश्रविरचितायां इति क० पु०

# अथ द्वितीयः पटलः ।

## नियमेषु तपश्शब्दः ॥ १ ॥

'आचार्याधीनः स्या'दित्यादयो ये नियमाः अस्मिन्ब्रह्मचारिप्रकरणे निर्दिष्टाः, तपश्शब्दस्तेषु द्रष्टव्यः, न तु कृच्छ्रादिषु ॥ १ ॥

## तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात् ॥ २ ॥

तेषां नियमानामतिक्रमे विद्याकर्म विद्याग्रहणं ब्रह्म निःस्रवति गृहीतं वेदं निस्सारयति । कुतः, ? एतस्मात् नियमातिक्रमेणाध्येतुः पुरुषात् । न केवलमेतस्मात् । किं तर्हि? सहापत्यात् । अपत्येन सह वर्तत इति सहापत्यः (१)'वोपसर्जनस्ये'ति सभावाभावे रूपम् । अपत्यादपि ब्रह्म निःसारयति। यद्यप्यपत्यं नियमातिक्रमकारि न भवति, तथापि पितृदोषादेव ततोऽपि ब्रह्म निस्सारयति । नियमातिक्रमेण विद्याग्रहणं कुर्वतः पुरुषात सहापत्यात् गृहीतं ब्रह्म निस्सरति, ब्रह्मयज्ञादिषूपयुज्यमानमप्यकिञ्चित्करं भवतीत्यर्थो विवक्षितः । स्रवतेश्च सकर्मकस्य प्रयोगो भाष्ये दृष्टः 'स्रवत्युदकं कुण्डिकेति ।

अपर आह—(२)तदतिक्रमे नियमातिक्रमे विद्याग्रहणं न कर्तव्यम् । कुतः ? यतो निस्स्रवति ब्रह्म निस्सरतीत्यर्थः, शेषं समानमिति । विद्याकर्म निस्स्रवति ब्रह्म च निस्स्रवतीत्यन्ये । अन्ये च—कुर्वत इत्यध्याहार्यम् । तदतिक्रमेण विद्याकर्म कुर्वतो ब्रह्म निस्स्रवतीति ॥ २ ॥

न केवलमकिञ्चित्करं नियमातिक्रमेण विद्याग्रहणम्, प्रत्युताऽनर्थकारीत्याह—

## कर्तपत्यमनायुष्यं च ॥ ३ ॥

कर्तशब्देन श्वभ्राभिधायिना नरको लक्ष्यते । पतत्यनेनेति पत्यम् । एवंभूतं विद्याग्रहणं नरकपातहेतुर्भवति । अनायुष्यं च अनायुष्करं च ॥ ३ ॥

---

१. पा.सू. ६ ३.८२. बहुव्रीह्यवयवस्य सहशब्दस्य सभावस्स्यद्विकल्पेन इति सूत्रार्थः।

२. तदतिक्रमे विद्याकर्म निस्स्रवतीति नियमातिक्रमेण विद्याग्रहणं न कर्तव्यम्, कुतः ? यतो निस्स्रवति ब्रह्मनिस्सारयतीत्यर्थः, इति क. पु.

**तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥ ४ ॥**

अत एवावरेषु अर्वाचीनेषु कलियुगवर्तिषु ऋषयो न जायन्ते मन्त्रदृशो न भवन्ति । नियमातिक्रमस्येदानीमवर्जनीयत्वात् ॥ ४ ॥

कथं तर्ह्यद्यतना अतिक्रामन्तोऽपि नियमानल्पेनैव यत्नेन चतुरो वेदान् गृह्णन्ति ? युगान्तरे सम्यगनुष्ठितस्य नियमकर्मणः फलशेषेणेत्याह—

**श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनस्सम्भवे ॥ ५ ॥**

पुनस्सम्भवः पुनर्जन्म ॥ ५ ॥

अत्रोदाहरणम्—

**यथा श्वेतकेतुः ॥ ६ ॥**

श्वेतकेतुर्ह्यल्पेनैव कालेन चतुरो वेदाञ्जग्राह । तथा च छान्दोग्यम्—(१)"श्वेतकेतुर्हारुणेय आस । तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं, न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति । स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षस्सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाये"ति ॥ ६ ॥

एवं नियमातिक्रमे दोषमुक्त्वा तदनुष्ठाने सिद्धिमाह—

**यत्किंच समाहितोऽब्रह्म प्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन् फलं भवति ॥ ७ ॥**

अब्रह्मपि अब्रह्मापि । पररूपम्,(२) कतन्तवत् । अपेर्वाऽकारलोपः, पिहितपिनद्धादिवत् । वेदव्यतिरिक्तमपि यत्किञ्चित् विषमन्त्रादि समाहितो नियमवान् भूत्वा आचार्यादुपयुङ्क्ते गृह्णाति तस्मिन् वेदव्यतिरिक्ते ब्रह्मवदेव फलं भवति ॥ ७ ॥

निग्रहानुग्रहशक्तिरप्यस्य भवतीत्याह—

**अथो यत्किञ्च मनसा वाचा चक्षुषा वा सङ्कल्पयन् ध्यायत्याहाऽभिविपश्यति वा तथैव तद्भवतीत्युपदिशन्ति ॥ ८ ॥**

अथो अपि च यत्किञ्च निग्रहात्मकं अनुग्रहात्मकं वा सङ्कल्पयन् चिकी·

---

१. छान्दो ६. १. १.    २. कर्कन्धुवत्, इति, घ. पु.

र्षन् मनसा निर्दयेन शिवेन वा ध्यायति–इत्थमिदमस्याऽस्त्विति, तथैव तद्भवति । तथा यत्किञ्च सङ्कल्पयन्वाचा (१)क्रूरया मधुरया वा आह—'इत्थमिदमस्यास्त्विति, तथैव तद्भवति । एवं यत्किञ्च सङ्कल्पयन् चक्षुषा घोरेण वा मैत्रेण वा अभिविपश्यति तथैव तद्भवतीत्युपदिशन्ति धर्मज्ञाः ॥ ८ ॥

अवश्यं धर्मयुक्तेनाध्येतव्यमित्युक्तम् । इदानीं ते धर्मा लक्षणतस्त्रिविधा इत्याह—

**गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्ति(२)रिति ॥ ९ ॥**

यैरनुष्ठितैः गुरुः प्रसीदति तानि गुरुप्रसादनीयानि पादप्रक्षालनादीनि कर्माणि । स्वस्तीत्यविनाशिनाम । तत्प्राप्तिसाधनं स्वस्त्ययनम् । तच्च त्रिविधंदृष्टार्थमदृष्टार्थमुभयार्थं चेति । दृष्टार्थं बाहुनदीतरणादिनिषेधः । अदृष्टार्थं क्षारादिनिषेधः । उभयार्थं भिक्षाचरणादि । अध्ययनसम्वृत्तिरधीतस्य वेदस्याऽभ्यासः ॥ ९ ॥

**अतोऽन्यानि निवर्तन्ते ब्रह्मचारिणः कर्माणि ॥ १० ॥**

एतेभ्यः अन्यानि कर्माणि निवर्तन्ते ब्रह्मचारिणो, न कर्तव्यानीत्यर्थः ॥१०॥

**स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुस्सिद्ध्यति ब्रह्मचारी ॥ ११ ॥**

स्वाध्यायधृक् अधीतस्य(३)वेदस्य धारयिता अविस्मर्ता । धर्मे रुचिर्यस्य स धर्मरुचिः । तपस्वी नियमेषु तपश्शब्दः तद्वान् । ऋजुः अमायावी । मृदुः । क्षमावान् । एवंभूतो ब्रह्मचारी सिद्ध्यति सिद्धिं प्राप्नोति । उक्ता सिद्धिः (४)'अथो यत्किञ्च मनसे 'ति । तत्रोक्तानां पुनर्वचनमादरार्थम् । तदनुष्ठाने फलभूमा, अतिक्रमे च दोषभूमेति तात्पर्यम् ॥ ११ ॥

**सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादनमभिवादयीताऽसावहं भो, इति ॥ १२ ॥**

सदा प्रतिदिनं महान्तमपररात्रं रात्रेः पश्चिमे याम उत्तिष्ठेत् । उत्थाय च

---

१. घोरया इति. क. पु. २. अयं 'इति' शब्द उत्तरसूत्रस्यादौ पठितः क० पुस्तके
३. 'स्वाध्यायस्य' इति क, ख. पु. ४. आप. ध. १. ५. ८.

समीपे तिष्ठन् गुरोः प्रातरभिवादनमभिवादयीत—'असावहं भो' इति ब्रुवन्। असावित्यत्राऽऽत्मनो नामनिर्देशः, यथा—'अभिवादये यज्ञशर्माऽहं भो' इति ॥ १२ ॥

समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशात् ॥ १३ ॥

अन्येषामप्याचार्यव्यतिरिक्तानाम् प्राक्प्रातराशात् प्रातर्भोजनात्प्राक् प्रातरभिवादमभिवादयीत, ते चेत् समानग्रामे वसन्ति ॥ १३ ॥

प्रोष्य च समागमे ॥ १४ ॥

यदा स्वयं प्रोष्य समागतो भवति, आचार्यादयो वा तदाऽप्यभिवादयीत। इदं नैमित्तिकम्। पूर्वं नित्यम् ॥ १४ ॥

अथ काम्यम्—

स्वर्गमायुश्चेप्सन् ॥ १५ ॥

अभिवादयीतेत्येव ॥ १५ ॥

अभिवादनप्रकारं वर्णानुपूर्व्येणाऽऽह—

दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीतोरस्समं राजन्यो मध्यसमं वैश्यो(१) नीचैश्शूद्रः प्राञ्जलि ॥ १६ ॥

ब्राह्मणोऽभिवादयमानः आत्मनो दक्षिणं बाहुं श्रोत्रसमं प्रसार्याभिवादयीत। उरस्समं राजन्यः। दक्षिणं प्रसार्याभिवादयीतेत्यत्रानुवर्तते। एवमुत्तरयोरपि। मध्यसममुदरसमम्। ऊरुसममित्यन्ये। नीचैः पादसमं शूद्रोऽभिवादयीत। प्राञ्जलि यथा भवति तथा अभिवादयति। अञ्जलिं कृत्वेत्यर्थः। प्राञ्जलिरिति युक्तः पाठः ॥ १६ ॥

प्लावनं च नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम् ॥ १७ ॥

अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लावनं कर्तव्यम् प्लुतः कर्तव्य इत्यर्थः। पूर्वेषां वर्णानां शूद्रवर्जितानामभिवादयमानानाम्।

---

१. ···नीचैश्शूद्रः ॥ १६ ॥ प्राञ्जलि ॥ १७ ॥ इति पाठः क. घ. पु.

(१)प्रत्यभिवादेऽशूद्र' इति पाणिनीयस्मृतिः । तत्र (२)'वाक्यस्य टे' रित्यनुवृत्तेः प्रत्यभिवादवाक्यस्यान्ते नामप्रयोगः तस्य टेः प्लुतः । 'आयुष्मान् भव सौम्या३ इति प्रयोक्तव्यः । स्मृत्यन्तरवशान्नाम्नश्च पश्चादकारः । तथा च मनुः—

(३)आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥" इति ।

'आयुष्मान् भव सौम्य देवदत्त ३ अ' इति प्रयोगः । शम्भुर्विष्णुः पिनाकपाणिश्चक्रपाणिरित्यादीनां नाम्नां सम्बुद्धौ गुणे कृते 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्ययं विधिर्भवति । अन्ते अकारः । (४) 'तयोर्य्वावचि संहितायाम्' इति यकारवकारौ च भवतः–शम्भा ३ व, विष्णा ३ व, पिनाकपाणा ३ य, चक्रपाणा ३ य, इति । अत्र सूत्रे 'प्रत्यभिवादने चे'ति चकारस्यार्थं न पश्यामः ।

अपर आह—'अभिवादने प्रत्यभिवादने च प्लावन'मिति । अस्मिन्नपि पक्षे द्वन्द्वेनाभिहितत्वाच्चशब्दोऽनर्थक एव । अभिवादने च शास्त्रान्तरे न क्वापि प्लुतो विहितः । तस्मादनर्थक एव चकारः । अनर्थकाश्च निपाता बहुलं प्रयुज्यन्ते ॥ १७ ॥

## उदिते त्वादित्य आचार्येण समेत्योपसंग्रहणम् ॥१८॥

उदिते त्वादित्ये आचार्येण अध्ययनार्थं समेत्य वक्ष्यमाणेन विधिनोपसंग्रहणं कुर्यात् ॥ १८ ॥

## सदैवाऽभिवादनम् ॥ १९ ॥

अन्यदा सर्वदा पूर्वोक्तप्रकारेणाभिवादनमेव । अयमनुवाद उत्तरविवक्षया ॥ १९ ॥

## उपसंग्राह्य आचार्य इत्येके ॥२०॥

अभिवादनप्रसङ्गे सदैव उपसंग्राह्य आचार्य इत्येके मन्यन्ते ॥ २० ॥

---

१. पा सू. ८. २. ८३. शूद्रभिन्नविषये प्रत्यभिवादे यद्वाक्यं "आयुष्मान् भव सौम्य" इत्यादिरूपं तस्य टेः प्लुतस्स्यात्, स चोदात्तः इति सूत्रार्थः ।

२. पा. सू. ८. २. ८२  ३. मनु. स्मृ. २. १२५.

४. पा. सू. ८. २. १०८. इदुतोर्यकारवकारौ स्तोऽचि संहितायाम् इति सूत्रार्थः।

ननु किमिदमुपसंग्रहणम् ? तदाह—

**दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयात् ॥ २१ ॥**

आत्मनो दक्षिणेन पाणिना आचार्यस्य दक्षिणं पादं अधस्तादभ्यधिमृश्य, अधिशब्द उपरिभावे, अधस्ताच्चोपरिष्टाच्चाभिमृश्य । सकुष्ठिकं सगुल्फम् । साङ्गुष्ठमित्यन्ये । उपसंगृह्णीयात् । इदमुपसंग्रहणम् । एतत्कुर्यात्॥२१॥

**उभाभ्यामेवोभावभिपीडयत उपसंग्राह्यावित्येके ॥२२॥**

उभाभ्यां पाणिभ्यां उभावेवाऽऽचार्यस्य पादौ अभिपीडयतो माणवकस्य उपसंग्राह्यावित्येके मन्यन्ते । अभिपीडयत इति "(१)कृत्यानां कर्तरि" इति कर्तरि षष्ठी । अत्र मनुः—

(२)'व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥ इति ॥ २२ ॥

**सर्वाह्णं सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥ २३ ॥**

सर्वं च तदहश्च सर्वाह्णम् । (३)'राजाहस्सखिभ्यष्टच् ।' (४)'अह्नोऽह्न एतेभ्य' इत्यह्नादेशः । (५)'अह्नादन्ता'दिति णत्वम् । अत्यन्तसंयोगे द्वितीया ।' सर्वाह्णं सदा सुयुक्तः सुसमाहितः अनन्याचित्तः । अध्ययनादनन्तरः नान्तरयतीत्यनन्तरः । अध्ययनाद्यथा आत्मानं नान्तरयति यथा अध्ययनान्न विच्छिद्येत तथा स्यात् । अध्याये स्वाध्यायकाले । अध्याय इत्यनुवादः । (६)'मनसा चानध्याय' इति विशेषविधानात् । 'अध्याये' दिति प्रायेण पठन्ति । तत्र तकारोऽपपाठश्छान्दसो वा ॥ २३ ॥

**तथा गुरुकर्मसु ॥ २४ ॥**

गुरुकर्मसु च तथा स्यात् सुयुक्तोऽनन्तरश्च स्यात् ॥ २४ ॥

---

१. पा. सू. २. ३. ७१    २. म. स्मृ. २. ७२.

३. पा० सू० ५. ४. ९१. राजन्शब्दान्तादहन्शब्दान्तात् सखिशब्दान्ताच्च तत्पुरुषात् टच् स्यात् इति सूत्रार्थः ॥

४. सर्वै, कदेश, संख्यात, पुण्यशब्देभ्यः परस्याहन्शब्दस्याह्न इत्यादेशस्स्यात् समासान्ते परे इति सूत्रार्थः ।

५. ९. ४. ७. अदन्तपूर्वपदस्थाद्रेफात् परस्याह्नादेशस्य नस्य णस्स्यात् इति सूत्रार्थः ।

६. आप. ध. १. ५. २६.

मनसा चाऽनध्याये ॥ २५ ॥

अनध्यायकाले मनसा च अध्यायादनन्तरः स्यात् । सन्देहस्थानानि मनसा निरूपयेत् । अध्ययनविषयामेव चिन्तां कुर्यात् ॥ २५ ॥

आहूताध्यायी च स्यात् ॥ २६ ॥

आचार्येणाहूतस्सन्नधीयीत, नाध्यापने स्वयं प्रवर्तयेत् ॥ २६ ॥

॥ इत्यापस्तम्बीये धर्मसूत्रे पञ्चमी काण्डिका ॥

सदा निशायां गुरुं संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्य ॥ १ ॥

सदा प्रत्यहं निशायां अतिक्रान्ते प्रदोषे गुरुं संवेशयेत् । कथम् ? तस्य गुरोः पादौ प्रक्षाल्य संवाह्य च । संवाहनं मर्दनम् ॥ १ ॥

अनुज्ञातः संविशेत् ॥ २ ॥

(१)गुरुणाऽनुज्ञातस्तु स्वयं संविशेत् शयीत ॥ २ ॥

न चैनमभिप्रसारयीत ॥ ३ ॥

एनमाचार्यं प्रति पादौ न प्रसारयेत् ॥ ३ ॥

न खट्वायां सतोऽभिप्रसारणमस्तीत्येके ॥ ४ ॥

यदा तु गुरुः खट्वायां शेते तदा तं प्रति पादयोः प्रसारणं न दोषायेत्येके मन्यन्ते, स्वपक्षस्तु तत्रापि दोष इति ॥ ४ ॥

न चाऽस्य सकाशे संविष्टो भाषेत ॥ ५ ॥

अस्याऽऽचार्यस्य सकाशे स्वयं संविष्टः शयानो न भाषेत । कार्यावेदनादावुत्थायैव भाषेत ॥ ५ ॥

अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ ६ ॥

आचार्येणा(२)भिभाषितस्त्वासीनः प्रतिब्रूयात् । एतदाचार्ये आसीने शयाने वा ॥ ६ ॥

अनूत्थाय तिष्ठन्तम् ॥ ७ ॥

---

१. पश्चाद्गुरुणा इति ख. पु. २. अभिभाषितस्सन् इति ख. पु.

यदा त्वाचार्यस्तिष्ठन् ब्रूते तदा तमनूत्थाय प्रतिब्रूयात् । उत्तरे द्वे सूत्रे स्पष्टार्थे ॥ ७ ॥

गच्छन्तमनुगच्छेत् ॥ ८ ॥ धावन्तमनुधावेत् ॥ ९ ॥

न सोपानद्वेष्टितशिरा अवहितपाणिर्वासीदेत् ॥ १० ॥

उत्तरत्रोपानत्प्रतिषेधा'न्न सोपान'दित्यनुवादः 'अध्वापन्नस्त्वि'ति प्रतिप्रसोतुम् । आचार्यं न सोपानत्क आसीदेत् । नापि वेष्टितशिराः । अवहितपाणिः दात्रादिहस्तः एवंभूतोऽपि नासीदेत् ॥ ८–१० ॥

अध्वापन्नस्तु कर्मयुक्तो वाऽऽसीदेत् ॥ ११ ॥

अध्वानं प्राप्तोऽध्वापन्नः कर्मणि दात्रादिसाध्ये प्रवृत्तः कर्मयुक्तः एवंभूतस्तु सोपानत्कोऽप्यासीदेत् ॥ ११ ॥

न चेदुपसीदेत् ॥ १२ ॥

(१) न चेदाचार्यस्समीपे, उपसीदेत् उपविशेत् । यदि तूपविशेदध्वापन्नः कर्मयुक्तो वा तदोपानत्प्रभृतीनि विहायोपविशेत ॥ १२ ॥

देवमिवाचार्यमुपासीताऽविकथयन्नविमना वाचं शुश्रूषमाणोऽस्य ॥ १३ ॥

यो यं देवं भजते स तद्भावनया तमिवाऽऽचार्यमुपासीत । अविकथयन् (२)व्यर्थां कथामकुर्वन् । अविमनाः अविक्षिप्तमनाः । अस्याऽऽचार्यस्य वाचं शुश्रूषमाणः ॥ १३ ॥

अनुपस्थकृतः ॥ १४ ॥

(३)उपस्थकरणं प्रसिद्धम् । तत्कृत्वा नोपासीत ॥ १४ ॥

अनुवाति(४) वाते वीतः ॥ १५ ॥

वाते अनुवाति सति वीतः विपर्ययेणेतः उपासीत । प्रतिवातं तु वक्ष्यमाणेन प्रतिषिध्यते । मनुरप्याह—

(५)'प्रतिवातेऽनुवाते च नासीत गुरुणा सहे'ति ॥ १५ ॥

---

१. न चेदाचार्यसमीपे उपसीदेत् उपविशेत् इति ख, पु.

२. व्यर्थां कथा विकथा तामकुर्वन् इति. ख. पु.

३. आकुञ्चितस्य सव्यजानुनउपरिदक्षिणं पादं प्रक्षिप्योपवेशनमुपस्थकरणम् ।

४. 'वाते' इति नास्ति ख. पु. ५. मनु. स्मृ. २. २०३.

अप्रतिष्टब्धः पाणिना ॥ १६ ॥

पाणिना प्रतिष्टब्धो न स्यात् पाणितलं भूमौ कृत्वा पाण्यवलम्बनो नाऽऽसीत ॥ १६ ॥

अनपाश्रितोऽन्यत्र ॥ १७ ॥

अन्यत्र कुड्याद्यपाश्रितो न स्यात् । कुड्याद्यपाश्रितो नासीत ॥ १७ ॥

यज्ञोपवीती द्विवस्त्रः ॥ १८ ॥

यदा द्विवस्त्रस्तदा वाससाऽन्यतरेण यज्ञोपवीती स्यात् । (१) "अपि वा सूत्रमेवोपवीतार्थे" इत्येष कल्पस्तदा न भवति ॥ १८ ॥

अधोनिवीतस्त्वेकवस्त्रः ॥ १९ ॥

यदा त्वेकवस्त्रो भवति तदा अधोनिवीतः स्यात् । न तस्य दीर्घस्याप्येकदेशेनोत्तरीयं कुर्यात् ॥ १९ ॥

अभिमुखोऽनभिमुखम् ॥ २० ॥

स्वयमाचार्याभिमुखः आत्मानं प्रत्यनभिमुखमाचार्यमुपासीत । (२)स्वयमाचार्यमपश्यन् आचार्यस्य पुरत आर्जवे नाऽऽसीत ॥ २० ॥

अनासन्नोऽनतिदूरे(३) च ॥ २१ ॥

अत्यासन्नो न स्याददतिदूरे च न स्यात् ॥ २१ ॥

यावदासीनो बाहुभ्यां प्राप्नुयात् ॥ २२ ॥

यावत्यन्तराले आसीन आचार्यं बाहुभ्यां प्राप्तुं शक्नुयात् तावत्यासीत ॥ २२ ॥

अप्रतिवातम् ॥ २३ ॥

आचार्यस्य (४)प्रतिवाते नाऽऽसीत ॥ २३ ॥

एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत् ॥ २४ ॥

यदा एक एवाऽधीते तदा आचार्यस्य दक्षिणं बाहुं प्रति दक्षिणे पार्श्वे उपसीदत् उपविशेत् ॥ २४ ॥

यथावकाशं बहवः ॥ २५ ॥

---

१. आप. ध. २. ४. २२.
२. स्वयमाचार्यमेव पश्यन् इति. ख. पु.
३. चकारो नास्ति. ख. पुस्तके
४. प्रतिवातं इति ख. पु.

बहवस्तु शिष्या यथावकाशमुपसीदेयुः ॥ २५ ॥

## तिष्ठति च नाऽऽसीताऽनासनयोगविहिते ॥ २६ ॥

आसनयोग आसनकल्पना। आसनयोगेन विहितस्सम्भावित आसनयोगविहितः । आसनयोगेनाऽसम्भाविते आचार्ये तिष्ठति सति स्वयं नाऽऽसीत ॥ २६ ॥

## आसीने च न संविशेत ॥ २७ ॥

(१)'अशयनयोगविहिते' इति पूर्वानुसारेण गम्यते। शयनयोगेनाऽसम्भावित आचार्ये आसीने स्वयं न संविशेत् न शयीत ॥ २७ ॥

## चेष्टति च चिकीर्षंस्तच्छक्तिविषये ॥ २८ ॥

व्यत्ययेन परस्मैपदम् । आचार्ये चेष्टति सति स्वयमपि तच्चिकीर्षन् स्यात् । किमविशेषेण, ? शक्तिविषये । यद्याचार्येण क्रियमाणमात्मनश्शक्तेर्विषयो भवति । 'चिकीर्ष' न्निति सन्प्रयोगादिच्छामेव प्रदर्शयेत् नाच्छिद्य कुर्यात्। प्रदर्शितायां त्विच्छायामाचार्यश्चेदनुजानीयात् , कुर्यात् । अशक्तिविषये तु नेच्छापि प्रदर्शयितव्या । चिकीर्षेदिति युक्तः पाठः ॥ २८ ॥

## न चास्य सकाशेऽन्वक्स्थानिन उपसङ्गृह्णीयात् ॥ २९ ॥

आचार्यव्यतिरिक्ता गुरवोऽन्वक्स्थानिन इति स्मार्तो व्यवहारः । आचार्यः श्रेष्ठो गुरूणाम् । तमपेक्ष्यान्वक्स्थानं पदमेषामिति कृत्वा । आचार्यस्य सन्निधौ अन्वक्स्थानिनं नोपसङ्गृह्णीयात् ॥ २९ ॥

## गोत्रेण वा कीर्तयेत् ॥ ३० ॥

न चैनमन्वक्स्थानिनं गोत्रेण अभिजनकुलादिना वा कीर्तयेत् न स्तुवीत भार्गवोऽयं महाकुलप्रसूत इति ॥ ३० ॥

## न चैनं प्रत्युत्तिष्ठेदनुत्तिष्ठेद्वा(२)पि चेत्तस्य गुरुः स्यात् ॥ ३१ ॥

प्रत्युत्थानमप्यस्य न कर्तव्यमाचार्यस्य सकाशे । यदा पुनरसावा·

---

१. आसनयोग इति क० पु०   २. अपि चेत्यादि सूत्रान्तरं. ख. च. पु ।

चार्यसकाशे त्वासित्वा गमनायोत्तिष्ठति तदाऽनूत्थानमपि न कर्तव्यम् । यद्यप्यसौ तस्य(१)आचार्यस्य मातुलादिः गुरुः स्यात् । (२)'आचार्यप्राचार्यसन्निपात' इति वक्ष्यति । तेनैव न्यायेन(३)मातुलादिष्वपि प्रसङ्गे इदमुक्तम् ॥ ३१ ॥

देशात्त्वासनाच्च संसर्पेत् ॥ ३२ ॥

किं तु देशादासनाच्च संसर्पेत्तस्य सम्मानार्थम् ॥ ३२ ॥

नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके ॥ ३३ ॥

तस्याचार्यस्यान्तेवासिनं नाम्नैव कीर्तयेत् 'यज्ञशर्मन्नि' ति । यद्यप्यसावात्मनो गुरुर्भवति इत्येवमेके मन्यन्ते । स्वपक्षस्तु गुरोर्नामग्रहणं न कर्तव्यमिति ॥ ३३ ॥

यस्मिंस्त्वनाचार्यसम्बन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेऽप्याचार्यस्य ॥ ३४ ॥

यस्मिंस्तु पुरुषे शिष्याचार्यभावमन्तरेणापि विद्याचारित्र्यादिना लौकिकानां गौरवं तस्मिन्नन्वक्स्थानीये ऽप्याचार्ये या वृत्तिस्सा कर्तव्या । अन्वक्स्थानीयोऽप्यनन्वक्स्थान्येव ॥ ३४ ॥

भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत् ॥ ३५ ॥

आचार्यस्य भुञ्जानस्याऽभुञ्जानस्य वा सकाशे भुक्त्वा अनूत्थाय छान्दसो दीर्घः । उत्थानमकृत्वा उच्छिष्टं न प्रयच्छेत् (४)'आर्याय वा पर्यवदध्या'दिति यद्विहितम् ॥ ३५ ॥

आचामेद्वा ॥ ३६ ॥

आचमनमप्यनुत्थाय न कुर्यात् ॥ ३६ ॥

किं करवाणीत्यामन्त्र्य ॥ ३७ ॥

आचम्य किं करवाणीति गुरुमामन्त्र्य ॥ ३७ ॥

इत्यापस्तम्बधर्मसूत्रे प्रथमप्रश्ने षष्ठी कण्डिका ॥

---

१. माणवकस्य इति क. पु.  २. आप० ध० १. ८. १९ पूजां वक्ष्यतीति ख० पु०
३. मातुलादिप्रसङ्गे इति क० पु०  ४. आप० ध० १. ३. ४०.

**उत्तिष्ठेत्तूष्णीं वा ॥ १ ॥**

उत्तिष्ठेत् तूष्णीं वा। विकल्पः। आमन्त्र्येति लिङ्गात्(१)उत्थायाप्याचामन्नाचार्यसकाश एवाऽऽचामेत् ॥ १ ॥

**नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्याऽपेयात् ॥ २ ॥**

उत्थाय कार्यवत्तया गन्तुमिच्छन् गुरोरप अपसव्यं न पर्यावर्तेत। किं तु प्रदक्षिणीकृत्याऽपेयात् ॥ २ ॥

**न प्रेक्षेत नग्नां स्त्रियम् ॥ ३ ॥**

यां प्रेक्षमाणस्य मनसो विकारो भवति तां नग्नां स्त्रियं नेक्षेत ॥ ३ ॥

**(२)ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत् ॥ ४ ॥**

ओषधयः फलपाकान्ताः। वनस्पतयो ये पुष्पैर्विना फलन्ति। वीरुद्वृक्षाणामप्युपलक्षणम्। तेषां पत्रपुष्पाण्याच्छिद्य नोपजिघ्रेत्। 'आच्छिद्ये'तिवचना(३)द्यादृच्छिकाघ्राणे न दोषः ॥ ४ ॥

**उपानहौ छत्रं यानमिति वर्जयेत् ॥ ५ ॥**

यानं शकटादि। इतिशब्द एवंप्रकाराणामुपलक्षणार्थः। तत्र गौतमः-(४)वर्जयेन्मधुमांसगन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवादवादनस्नानदन्तधावनहर्षनृत्तगीतपरिवादभयानीति ॥ ५ ॥

**न स्मयेत ॥ ६ ॥**

स्मितं न कुर्यात् ॥ ६ ॥

**यदि स्मयेताऽपिगृह्य स्मयेतेति हि ब्राह्मणम् ॥ ७ ॥**

यदि हर्षातिरेकं धारयितुं न शक्यते अपिगृह्य हस्तेन मुखं पिधाय स्मयेत इति ब्राह्मणं 'न स्मयेते' त्यारभ्य ॥ ७ ॥

---

१. उत्थायाप्याचमनं न कुर्यात्, आचार्यसमीप एवाचामेत्। इति. ख. पु.

२. "अथैतत् ब्रह्मचारिणः पुण्यो गन्धो य ओषधिवनस्पतीनां तासां पुण्यं गन्धं प्रच्छिद्य नोपाजिघ्रेत् तेन तं पुण्यं गन्धमवरुन्धे" इति गोपथब्राह्मणम्। (गो. ब्रा. १. २. २)

३. यादृच्छिके गन्धग्रहणे न दोषः इति ख० पु०

४. गौ. ध. २-१३.

(१)नोपजिघ्रेत् स्त्रियं मुखेन ॥ ८ ॥

स्नाता(२)मनुलिप्तां वा स्त्रियं बालामपि मुखेन नोपजिघ्रेत् । 'मुखेने' ति वचनाद्यादृच्छिके गन्धाघ्राणे न दोषः ॥ ८ ॥

न हृदयेन प्रार्थयेत् ॥ ९ ॥

हृदयेन मनसा स्त्रियं न प्रार्थयेत्—अपीयं मम स्यादिति ॥ ९ ॥

नाकारणादुपस्पृशेत् ॥ १० ॥

कारणेन विना स्त्रियं नोपस्पृशेत् । कारणं योक्त्रसन्नहनविमोचनविषमपतनधारणादि ॥ १० ॥

रजस्वलो रक्तदन्सत्यवादी स्यादिति हि ब्राह्मणम् ॥ ११ ॥

रजस्वलो मलिनगात्रः । रक्ता दन्ता यस्य स रक्तदन् । छान्दसो दन्नादेशः । पङ्किलदन्त इत्यर्थः । एतदुभय 'मुत्सन्नश्लाघ'(१-१-२७)इत्यनेन गतमपि पुनरुच्यते(३)श्रौतप्रायश्चित्तप्राप्त्यर्थम् । 'अनृतं वोक्त्वे'(२-१-२७) ति प्रायश्चित्तं वक्ष्यति । सत्यवादी स्यादिति ब्राह्मणम् ॥ ११ ॥

यां विद्यां कुरुते गुरौ तेऽप्यस्याऽऽचार्या ये तस्यां गुरोर्वंश्याः ॥ १२ ॥

आत्मीये गुरौ यां विद्यां कुरुते अधीते तस्यां विद्यायां गुरोर्वंश्या आचार्यास्तेऽप्यस्य माणवकस्याचार्याः । यद्यपि साक्षात्तेभ्यो न गृह्यते विद्या तथापि आचार्यवदुपचरितव्याः । 'तस्या' मिति वचनाद्विद्यान्तरे ये वंश्यास्तेषु नायं विधिः ॥ १२ ॥

यानन्यान् पश्यतोऽस्योपसङ्गृह्णीयात्तदात्वे त उपसङ्ग्राह्याः ॥ १३ ॥

अस्य माणवकस्य पश्यत अस्मिन् माणवके पश्यति यानन्यानाचार्य उपसङ्-

---

१. पञ्च ह वा एते ब्रह्मचारिण्यग्नयो धीयन्ते द्वौ पृथग्धस्तयोर्मुखे हृदये उपस्थ एव पञ्चमः । स यद्दक्षिणेन पाणिना स्त्रियं न स्पृशति तेनाहरहर्याजिनां लोकमवरुन्धे, यत्सव्येन तेन प्रव्राजिनाम्, यन्मुखेन, तेनाग्निप्रस्कन्दिनां, यद्धृदयेन तेन शूराणां, यदुपस्थेन तेन गृहमेधिनां, तैश्चेत् स्त्रियं पराहरत्यनग्निरिव शिष्यते ॥ इति गो. ब्रा. १. २. ४.

२. अनुलिप्ताङ्गीं इति. ख. पु. ३. श्रौतप्रायश्चित्तमतिक्रम्य स्यादिति. ख. पु.

गृह्णीयात्ते माणवकस्याऽप्युपसङ्ग्राह्याः। किं सदा ? नेत्याह—तदात्वे तस्यां दशायाम्। अपर आह—तदा प्रभृति त उपसङ्ग्राह्याः। तुशब्दात् समावृत्तेनापि ॥ १३ ॥

**गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्ध-स्तदधीना भिक्षा ॥ १४ ॥**

यदा द्वितीयं तृतीयं वा वेदमधीयानस्य माणवकस्य गुरुसमवायो भवति गुरवः समवेता भवन्ति, तदा भिक्षायामुत्पन्नायां यं गुरुमिदानी-मनुबद्धो माणवकः यतोऽधीते तदधीना भिक्षा, यच्च यावच्च लब्धं तत्तस्मै निवेदनीयम्। (१)तदुक्तश्च विनियोगः ॥ १४ ॥

**समावृत्तो मात्रे दद्यात् ॥ १५ ॥**

कृतसमावर्तनो विवाहात्प्रागर्जितं मात्रे दद्यात् ॥ १५ ॥

**माता भर्तारं गमयेत् ॥ १६ ॥**

माता पतिं प्रापयेत् ॥ १६ ॥

**भर्ता गुरुम् ॥ १७ ॥**

(२) प्रापयेत्। माणवकस्य गुरुम्, माणवकार्जितं द्रव्यं तद्गामि युक्तम् ॥ १७ ॥

**धर्मकृत्येषु वोपयोजयेत् ॥ १८ ॥**

धर्मकृत्यानि विवाहादीनि। तेषु वोपयोजयेत्। गुरोरभावे भर्ता, तदभावे माता, सर्वेषामभावे समावृत्तस्स्वयमेव वा ॥ १८ ॥

**कृत्वा विद्यां यावतीं शक्नुयात् वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥ १९ ॥**

यावतीं विद्यां कर्तुं शक्नुयात् वेदं वेदौ वेदान्वा तावतीं कृत्वा अधीत्य गुरवे दक्षिणामाहरेत् दद्यात्। यथाशक्ति धर्मत उपलब्धां न्यायार्जिताम् ॥१९॥ धर्मत इत्यस्यापवादः—

**विषमगते त्वाचार्य उग्रतः शूद्रतो वाऽऽहरेत् ॥२०॥**

---

१. ततश्च विनियोगः इति. क. पु. २. सोऽपि गुरुं प्रापयेन्माणवकस्य इति ख. पु.

यदा स्वाचार्यो विषमगतः आपद्गतः तदा उग्रतः शूद्रतो वाऽपि प्रतिगृह्य दक्षिणामाहरेत् । वैश्याच्छूद्रायां जात उग्रः, उग्रकर्मा वा द्विजातिः ॥२०॥

**सर्वदा शूद्रत उग्रतो वाऽऽचार्यार्थस्याहरणं धर्म्यमित्येके ॥ २१ ॥**

सर्वदा आपद्यनापदि च, आचार्यार्थस्याचार्याय यो देयोऽर्थः तस्य, उग्रतः शूद्रतो वाऽऽहरणं धर्म्यं धर्मादनपेतमित्येके मन्यन्ते । 'धार्म्य'मिति पाठे स्वार्थे ष्यञ् ॥ २१ ॥

**दत्वा च नाऽनुकथयेत् ॥ २२ ॥**

आचार्याय एवमाहृत्य दत्वा न कीर्तयेत्,-एतन्मया दत्तमिति ॥ २२ ॥

**कृत्वा च नाऽनुस्मरेत् ॥ २३ ॥**

गुरवे प्राणसंशयादौ महान्तमप्युपकारं कृत्वा नानुस्मरेत् नाऽनुचिन्तयेत्—अहो मयैतत्कृतमिति ॥ २३ ॥

**आत्मप्रशंसां परगर्हामिति च वर्जयेत् ॥ २४ ॥**

इतिकरणादेवंप्रकाराणामात्मानिन्दादीनामपि प्रतिषेधः ॥ २४ ॥

**प्रेषित(१)स्तदैव प्रतिपद्येत ॥ २५ ॥**

इदं कुर्वित्याचार्येण प्रेषितस्तदैव प्रतिपद्येत कुर्यात् क्रियमाणमपि कर्म विहाय, यद्यपि (२) तदाचार्यस्य भवति ॥ २५ ॥

**शास्तुश्चाऽनागमाद्वृत्तिरन्यत्र ॥ २६ ॥**

तस्मिंश्च 'विद्याकर्मान्त' मित्यस्यापवादः । यद्यधिगन्तुमिष्टा विद्या शास्तुः शासितुराचार्यस्य सम्यङ्नाऽऽगच्छति तदा तस्यानागमात् अन्यत्र पुरुषान्तरे वृत्तिर्भवत्येव यस्य सम्यगागच्छति । (३)येषामाचार्यविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यत' इत्यवोचाम ॥ २६ ॥

**अन्यत्रोपसङ्ग्रहणादुच्छिष्टाशनाच्चाऽऽचार्यवदाचार्यदारे वृत्तिः ॥ २७ ॥**

अन्यत्रेत्युभयोश्शेषः । आचार्यवदाचार्यदारे वृत्तिः कर्तव्या । कि-

---

१. तदेव इति ख. पु. २. तदाचार्याय इति ख पु.

३. येषामित्याद्यवोचामत्येन्तः पाठो नास्ति ख. पुस्तके

मविशेण ? अन्यत्रोपसङ्ग्रहणादुच्छिष्टाशनाच्च, पादोपसङ्ग्रहणमुच्छिष्टाशनं च इत्येतदुभयं वर्जयित्वा । अत्र मनुः—

(१)'गुरुवद्गुरुपत्नीषु युवतीर्नाभिवादयेत् ।' इति ।

गौतमस्तु, (२)'तद्भार्यापुत्रेषु चैवं नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षालनोन्मर्दनोपसङ्ग्रहणानि' इति । 'दार' इत्येकवचनं छान्दसम् ॥२७॥

## तथा समादिष्टेऽध्यापयति ॥ २८ ॥

य आचार्येण समादिष्टो नियुक्तोऽध्यापयति तस्मिन्नाचार्यदारवद्वृत्तिः । 'अध्यापयती'ति वर्तमाननिर्देशा(३)द्यावदध्यापनमेवायमतिदेशः ॥२८॥

## वृद्धतरे च सब्रह्मचारिणि ॥ २९ ॥

अध्यापयतीति नाऽनुवर्तते । तरनिर्देशात् ज्ञानवयोभ्यामुभाभ्यां वृद्धो गृह्यते । सब्रह्मचारी सहाध्यायी, समाने ब्रह्मणि व्रतं चरतीति । तस्मिन्नप्याचार्यदारवद्वृत्तिः ।

'आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया ।
पादं सब्रह्मचारिभ्यः पादः कालेन पच्यते ॥'

इत्यध्ययने उपयोगसम्भवात् ॥ २९ ॥

## उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥ ३० ॥

'उच्छिष्टाशनवर्ज'मिति वचनादुपसङ्ग्रहणं भवति । एतच्च ज्ञानवयोभ्यामुभाभ्यां वृद्धे । तदर्थं वृद्धतर इत्यनुवर्तते । गौतमीयस्तूपसङ्ग्रहणप्रतिषेधो वृद्धतरादन्यविषयः ॥ ३० ॥

## समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु ॥ ३१ ॥

कृतसमावर्तनस्याप्येतदेवानन्तरोक्तम् । एतेष्वाचार्यादिषु पुत्रान्तेषु सामयाचारिकं समयाचारप्राप्तं वृत्तमान्तात् । समादिष्टे त्वध्यापयीतेति(२८) विशेष उक्तः ॥ ३१ ॥

॥ इत्यापस्तम्बीयधर्मसूत्रवृत्तावुज्वलायां सप्तमी कण्डिका ॥

---

१. मनु. स्मृ. २. २१२. गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः । इति मुद्रितमनुस्मृतिपाठः ।

२. गौ. ध. २. ३१. ३२. ३. यावदध्यापनं तावदेवातिदेशः इति. ख. पु.

यथा ब्रह्मचारिणो वृत्तम् ॥ १ ॥

समावृत्तस्येति(१) वर्तते । समावृत्तस्य (२)ब्रह्मचारिणोऽकृतविवाहस्य यथा वृत्तं वर्तनं तथा वक्ष्यामः ॥ १ ॥

माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टि-त्युपवेष्टिती काञ्चुक्युपानही पादुकी ॥ २ ॥

माली मालावान् । आलिप्तमुखश्चन्दनादिना । मुखग्रहणमुपलक्षणम् । (३)मुखमग्रे ब्राह्मणोऽनुलिम्पेदि'त्याश्वलायनवचनात् । सुगन्धिभिरामलकादिभिर्द्रव्यैरुपलिप्तानि संस्कृतानि केशश्मश्रूणि यस्य सः उपलिप्तकेशश्मश्रुः । अक्तः अञ्जनेनाऽक्ष्णोः । अभ्यक्तः तैलेन । वेष्टिती वेष्टितशिराः । कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य सः उपवेष्टिती । कञ्चुकश्चोपानच्च कञ्चुकोपानहम् । (४)द्वन्द्वाच्चुदषहान्तादित्यच् समासान्तः । तदस्यास्तीति कञ्चुकोपानही । द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिप्रत्ययः । प्रसिद्धे पाठे कञ्चुकमेव काञ्चुकं तद्वान् काञ्चुकी । उपानद्वानुपानही । व्रीह्यादित्वादिनिः । पादुके दारुमये पादरक्षणे तद्वान् पादुकी ॥ २ ॥

उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा ॥ ३ ॥

अस्याऽऽचार्यादेः पुत्रान्तस्य उदाचारेषु दृष्टिगोचरेषु देशेषु एतानि माल्यादीनि न कुर्यात्कारयेद्वा ॥ ३ ॥

स्वैरिकर्मसु च ॥ ४ ॥

एतानि न कुर्यात् कारयेद्वा ॥ ४ ॥

तत्रोदाहरणम्—

यथा दन्तप्रक्षालनोत्सादनावलेखनानीति ॥ ५ ॥

दन्तप्रक्षालनं दन्तधावनम् । उत्सादनमुद्वर्तनम् । अवलेखनं कङ्कतादिना केशानां विभागेनाऽवस्थापनम् । इतिशब्दः प्रदर्शनार्थः । तेन स्नानभोजनमूत्रोच्चारादिष्वपि प्रतिषेधः ॥ ५ ॥

तद्द्रव्याणां च न कथयेदात्मसंयोगेनाऽऽचार्यः ॥ ६ ॥

---

१. अनुवर्तत इति ख. पु.  २. कृतविवाहस्य' इति क. पु.  ३. आश्व. गृ. ३. ७. १०.
४. पा. सू. ५. ४. १०६. चवर्गान्तात् वहान्ताच्च द्वन्द्वाट्टच् स्यात् समाहारे इति सूत्रार्थः ।

तस्य शिष्यस्य गृहस्थभूतस्य यानि द्रव्याण्युपस्थापितानि तेषां मध्ये एकेनापि द्रव्येण यथाऽऽत्मा संयुज्यते तथा न कथयेत् । आचार्यः शिष्यगृह(१)मेत्य अहो दर्शनीयं भोजनपात्रमित्यादि(२) लिप्सा यथा गम्यते तथा न कथयेदिति ॥ ६ ॥

**स्नातस्तु काले यथाविध्यभिहृतमाहूतोऽभ्येतो वा न प्रतिसंहरेदित्येके ॥ ७ ॥**

(३)'वेदमधीत्य स्नास्य'न्नित्यनेन विधिना स्नातः तस्मिन्काले यथाविध्यभिहृतमाबद्धं स्रगादि आचार्येणाहूतः स्वयमेव वा तत्समीपमभ्येतो न प्रतिसंहरेत् न विमुञ्चेदित्येके मन्यते । स्वपक्षस्तु तदापि मुञ्चेदिति । 'काले यथाविध्यभिहृत'मिति वचनादपरेद्युरारभ्य प्रतिसंहरेदेव ॥ ॥ ७ ॥

**उच्चैस्तरां नाऽऽसीत ॥ ८ ॥**

स्वार्थे तरप् । आचार्यासनादुच्चासने नाऽऽसीत ॥ ८ ॥

**तथा बहुपादे ॥ ९ ॥**

नीचेऽप्यासने बहुपादे नाऽऽसीत ॥ ९ ॥

**सर्वतः प्रतिष्ठिते ॥ १० ॥**

आसने आसीत । आचार्ये पीठादावुपवेश्य स्वयं वेत्रासनादावासीत । तद्धि भूमौ सर्वतः प्रतिष्ठितम् ॥ १० ॥

**शय्यासने चाऽऽचरिते नाविशेत् ॥ ११ ॥**

आचार्येणाचरित उपभुक्ते शय्यासने नाऽऽविशेत् । शयने न शयीत आसने नासीत । पित्रादिष्वपि गुरुषु समानमिदम् । तथा च मनुरविशेषेणाह-(४)शय्यासने चाध्युषिते श्रेयसा न समाचरेत् ।' इति ॥११॥ गतं समावृत्तस्य वैशेषिकम् । अथ ब्रह्मचर्यविधेरेव शेषः—

**यानमुक्तोऽध्वन्यन्वारोहेत् ॥ १२ ॥**

यानं शकटादि । आरोहेत्युक्तो गुरुणा पश्चादारोहेत । अध्वनि मार्गे

---

१. प्रत्यागत इति ख. पु. २. ईप्सा इति. ख. पु. ३. आप. गृ. १२. १. ४. मनु. २. ११९ 'शय्यासनेऽध्याचरिते' इति मेधातीथिसम्मतः पाठः । शय्या चासनं चेति द्वन्द्वैकवद्भावः ।

'छत्रं यानमिति वर्जये'दिति पूर्वोक्तस्य प्रतिषेधस्यापवादः। यानं च गुर्वारूढमन्यद्वा ॥ १२ ॥

**सभानिकषकटस्वस्तरांश्च ॥ १३ ॥**

उक्तोऽध्वन्यन्वारोहेदित्येव । 'सभास्समाजांश्चे' त्यस्यापवादार्थं सभाग्रहणम् । निकषो नाम कृषीवलानामुपकरणं, कृष्टं क्षेत्रं येन समीक्रियते, यच्च कस्मिंश्चिदारूढं(१) केनचिदाकृष्यते । तत्र गुरुणा आकृष्यमाणेऽपि तेनोक्तस्सन्नारोहेत । न त्वनौचित्यभयान्नारोहेदिति । कटो वीरणनिर्मिता शय्या । तत्र गुरुणोक्तस्सन् सहाऽऽसीत । उत्सवादावेष आचारः । स्वस्तरो नाम पलालशय्या । (२) नवस्वस्तरे संविशन्ती' ति दर्शनात् । तत्रापि गुरुणोक्तस्सन् सहासनादि कुर्यात् ॥ १३ ॥

**नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥१४॥**

गुरुणाऽनभिभाषितो गुरुं प्रति न किञ्चित् ब्रूयात् प्रियादन्यत् । प्रियं तु ब्रूयात् यथा ते पुत्रो जात इति ॥ १४ ॥

**व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् ॥ १५ ॥**

व्युपतोदः (३)अङ्गुल्यादिघट्टनं यदाभिमुख्यार्थं क्रियते । व्युपजापः श्रोत्रयोर्मुहुर्मुहुर्जल्पनम् । वकारश्छान्दसोऽपपाठो वा । व्यभिहासः आभिमुख्येन हसनम् । उदामन्त्रणमुच्चैस्सम्बोधनम् ; यथा बाधिरं प्रति । नामधेयग्रहणं दशम्यां पितृविहितस्य नाम्नो ग्रहणम्। न पूज्यनाम्नो भगवदादेः । प्रेषणमाज्ञापनम् । एतानि गुरुविषये न कर्तव्यानि । इतिकरणादेवंप्रकाराणामन्येषामपि प्रतिषेधः । यथाऽऽह मनुः—

(४) नोदाहरेत्तस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ इति ॥ १५ ॥

**आपद्यर्थं ज्ञापयेत् ॥ १६ ॥**

आपदि व्युपतोदादिभिरप्यर्थमभिप्रेतं ज्ञापयेत् । असति पुरुषान्तरे (५)वचनेनापि बोधयेत्, न साक्षात्प्रेषयेत्, यथा-शूलतोदो मे भवति,

---

१. केनचिदाकृष्यमाणे क्षेत्र समं भवति. इति. घ. पु.
२. आप. गृ. १९-९
३. अङ्गुल्यादिना संघट्टनम् इति. घ. पु.
४. मनु, २.१९९
५. वचनेनैव इति क. पु.

स चाऽग्निना शाम्यति, न चात्र कश्चित्सन्निहितः, किं करोमि मन्दभाग्य इति ॥ १६ ॥

उत्तरं सूत्रे समावृत्तविषये—

**सहवसन्सायं प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत् ॥ १७ ॥**

सह एकस्मिन् ग्रामे वसन् सायं प्रातरनाहूतोऽपि गुरुं दर्शनार्थो नान्यप्रयोजनो गच्छेत् ॥ १७ ॥

**विप्रोष्य च तदहरेव पश्येत् ॥ १८ ॥**

यदा ग्रामान्तरं गतः प्रत्यागच्छति तदा तदहरेवाऽऽचार्यं पश्येत् ॥१८॥

**आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंगृह्योपसञ्जिघृक्षेदाचार्यम् ॥ १९ ॥**

आचार्यस्याऽऽचार्यः प्राचार्यः प्रपितामहवत् । यदा आचार्यस्य प्राचार्यस्य च कार्यवशात् सन्निपातो मेलनं भवति, तदा प्राचार्याय द्वितीयार्थे चतुर्थी । प्राचार्यं पूर्वमुपसंगृह्य पश्चात्स्वाचार्यमुपसङ्ग्रहीतुमिच्छेत । न केवलं मनसा किन्तु यथाऽऽचार्यो जानाति मामयमुपसञ्जिघृक्षतीति तथा चेष्टेत । अन्यथा अदृष्टार्थमुपदिष्टं स्यात् ॥ १९ ॥

**प्रतिषेधेदितरः ॥ २० ॥**

इतर आचार्यः प्रतिषेधेत् 'वत्स मा मोपसङ्ग्रहीः'रिति ॥ २० ॥

**लुप्यते पूजा चाऽस्य सकाशे ॥ २१ ॥**

अस्य प्राचार्यस्य सकाशे सन्निधौ आचार्यस्य पूजा लुप्यते न कार्या । न केवलमुपसङ्ग्रहणमेव । उत्तरसूत्रं समावृत्तविषयम् ॥ २१ ॥

**मुहूंश्चाऽऽचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायाऽपि दन्तप्रक्षालनानीति ॥ २२ ॥**

मुहूंश्चेत्यनुस्वारदीर्घौ छान्दसौ । वीप्सालोपश्चात्र द्रष्टव्यः । मुहुर्मुहुरिति विवक्षितम् । ग्रामान्तरे वसन्नपि मुहुर्मुहुराचार्यकुलं दर्शनार्थमागच्छेत् । यथाशक्ति गोरसापूपादि अधिहस्त्यं हस्ते भवमादाय स्वयमेव गृहीत्वेत्यर्थः । अपिशब्दोऽभावे विधिं द्योतयति—गोरसाद्यभावे दन्तकाष्ठान्यपीति । इतिशब्दः अन्तेवासिधर्माणां समाप्तिद्योतनार्थः ॥ २२ ॥

**(१)मातरं पितरमाचार्यमग्नींश्च गृहाणि च रिक्त-पाणिर्नोपगच्छेद्राजानं चेन्न श्रुतमिति ॥ २३ ॥**

**तस्मिन्गुरोर्वृत्तिः ॥ २४ ॥**

तस्मिन्नन्तेवासिनि गुरोर्वृत्तिः । वृत्तेः प्रकारो वक्ष्यते ॥ २३ ॥ २४ ॥

**पुत्रमिवैनमनुकाङ्क्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् ॥ २५ ॥**

एनं शिष्यं पुत्रमिव(२) अस्याऽभ्युदयः स्यादिति अनुकाङ्क्षन् सर्वेषु धर्मेषु किञ्चिदप्यनपच्छादयमानः अगूहन् सुयुक्तः सुष्ठ्ववहितः तत्परो भूत्वा विद्यां ग्राहयेत् ॥ २५ ॥

**न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु ॥ २६ ॥**

न चैनं शिष्यमध्ययनविघ्नेनाऽऽत्मप्रयोजनेष्वनापत्सूपरुन्ध्यात्। (३)उपरोधः अस्वतन्त्रीकरणम् । 'अनापत्स्वि' तिवचनादापद्यध्ययनविघातेनाऽप्युपरोधे न दोषः ॥ २६ ॥

**अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः ॥ २७ ॥**

'आपद्यमान' इत्यन्तर्भावितण्यर्थः । योऽन्तेवासी विनिहितात्मा द्वयोराचार्ययोः(४)विविधं निहितात्मा गुरावनैपुणमापादयति—नाऽनेनाऽयं प्रदेशः सम्यगुक्त इति, सोऽन्तेवासी न भवति । स त्याज्य इत्यर्थः(५) ।

अपर आह—योऽन्तेवासी वाङ्मनःकर्मभिरनैपुणमापद्यमानो गुरौ विसदृशं निहितात्मा भवति अनुरूपं न शुश्रूषते सोऽन्तेवासी न भवतीति॥२७॥

**आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥ २८ ॥**

आचार्योऽप्यनाचार्यो भवतीति; त्याज्य इत्यर्थः । किं कुर्वन् ? श्रुतात्परिहरमाणः तेन तेन व्याजेन विद्याप्रदानमकुर्वन् ॥ २८ ॥

---

१. इदं सूत्रं क. पुस्तक एव दृश्यते । नान्यत्र । २. अभ्यासादिषु इति ङ. पु.
३. उपरोधः स्वतन्त्रीकरणम्. इति. ङ. पु. ४. विधिवत् इति. ख. पु. ।
५. "अत्र मनुः—धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा । तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे इति–"इत्यधिकः पाठो दृश्यते ख. पुस्तके

**अपराधेषु चैनं सततमुपालभेत ॥ २९ ॥**

अपराधेषु कृतेष्वेनं शिष्यं सततमुपालभेत–इदमयुक्तं त्वया कृतमिति ॥२९॥

**अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमानिवृत्तेः ॥ ३० ॥**

अभित्रासो (१)भयोत्पादनम्। उपवासो भोजनलोपः। उदकोपस्पर्शनं शीतोदकेन स्नापनम्। अदर्शनं यथाऽऽत्मानं न पश्यति तथा करणम्। गृहप्रवेशनिषेधः। सर्वत्र ण्यन्तात् प्रत्ययः। इत्येते दण्डाः शिष्यस्य यथामात्रं यावत्यपराधमात्रा तदनुरूपं व्यस्ताः समस्ताश्च। आनिवृत्तेः यावदसौ न ततोऽपराधान्निवर्तते तावदेते दण्डाः ॥ ३० ॥

**निवृत्तं चरितब्रह्मचर्यमन्येभ्यो धर्मेभ्योऽनन्तरो भवेत्यतिसृजेत् ॥ ३१ ॥**

एवं चरितब्रह्मचर्यं निवृत्तं गुरुकुलात् कृतसमावर्तनमित्यर्थः। एवंभूतमन्येभ्यो धर्मेभ्यो यमसावाश्रमं प्रतिपित्सते तत्र तेभ्योऽनन्तरो भव यथा त्वमन्तरितो न भवसि तथा भवेत्युक्त्वाऽतिसृजेत्। तं तमाश्रमं प्रतिपत्तुमुत्सृजेत् ॥ ३१ ॥

इत्यापस्तम्बसूत्रवृत्तावुज्वलायामष्टमी कण्डिका ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तविरचितायामुज्ज्वलायां प्रथमप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

१. रज्जुवेण्वादिना भयोत्पादनम् इति. ख. पु.

एवमध्येतुरध्यापयितुश्च धर्मा उक्ताः । अथ देशकालकृता अध्ययनधर्मा उच्यन्ते—

**श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाऽधीयीत ॥ १ ॥**

मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते ।
चान्द्रमासास्तत्तदन्ताश्चैत्राद्या द्वादश स्मृताः ।
तेषु या या पौर्णमासी सा सा चैत्र्यादिका स्मृता ।
काद्दाचित्केन योगेन नक्षत्रस्येति निर्णयः ॥

तदेवं सिंहस्थे सवितरि याऽमावास्या तदन्ते चान्द्रमसे मासे या मध्यवर्तिनी पौर्णमासी सा श्रावणी । श्रवणयोगस्तु भवतु वा मा वा । तस्यां श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य गृह्योक्तेन विधिनोपाकर्म कृत्वा स्वाध्यायमधीयीत । अधीयानश्च मासमेकं प्रदोषे प्रथमे रात्रिभागे नाधीयीत ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात् । प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोषः ॥ १ ॥

**तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् ॥ २ ॥**

तिष्यः पुष्यः; तेन युक्ता पौर्णमासी तैषी श्रावणीवत् । तस्यां विरमेत् । उत्सर्जनं कुर्यात् । तस्यापि प्रयोगो(१)गृह्य एवोक्तः । रोहिण्यां वा, (२)तैषमासि तिष्यात्पूर्वा या रोहिणी तस्यां वा विरमेत् । अनयोः पक्षयोः पञ्च मासानधीयीत ॥ २ ॥

**अर्धपञ्चमांश्चतुरो मासानित्येके ॥ ३ ॥**

अर्धः पञ्चमो येषां ते अर्धपञ्चमाः । अर्धाधिकांश्चतुरो मासान् अधीयीतेत्यपेक्ष्यत (३)इत्येके मन्यन्ते । अस्मिन्पक्षे प्रोष्ठपद्यामुपाकरणं शास्त्रान्तरदर्शनात् । उत्सर्जनस्य वा प्रतिकर्षः । उत्सर्जने च कृते श्रावण्याः प्राक् शुक्लपक्षेषु धारणाध्ययनं वेदस्य, कृष्णपक्षेषु व्याकरणाद्यङ्गाध्ययनम् । पुनः श्रावण्यामुपाकृत्यागृहीतभागस्य ग्रहणाध्ययनमिति । प्रपञ्चितमेतद्(४)गृह्ये ॥ ३ ॥

---

१. आपस्तम्बगृह्यसूत्रान्तर्गतोपाकर्मोत्सर्जनपटलव्याख्यानेऽनाकुलायामित्यर्थः । (आप. गृ. सू. पृ. १५४.) एतद्वचनबलादेव हरदत्तेनोपाकर्मोत्सर्जनाख्यः पटलः आपस्तम्बगृह्यान्तर्गतो व्याख्यात इत्यवगम्यते इति न्यरूपयाम गृह्यटिप्पण्याम् ।

२. 'तिष्ये मासि भवा या रोहिणी' इति ङ. पु.

३. अत्र मनुः ४. ९५. द्रष्टव्यः ।　　४. आप. गृ. ७. १. पृ. ११०.

निगमेष्वध्ययनं वर्जयेत् ॥ ४ ॥

निगमाश्चत्वराः । ग्रामनिर्गमनामार्गा वा ; नियमेन गम्यते तेष्विति । तेषु सर्वप्रकारमध्ययनं वर्जयेत् ॥ ४ ॥

आनडुहेन वा शकृत्पिण्डेनोपलिप्तेऽधीयीत ॥ ५ ॥

अनडुत्सम्बन्धिना वा शकृत्पिण्डेनोपलिप्य निगमेष्वप्यधीयीत॥५॥

श्मशाने सर्वतः शम्याप्रासात् ॥ ६ ॥

श्मशाने चाध्ययनं वर्जयेत् । सर्वतः सर्वासु दिक्षु । शम्या क्षिप्ता यावति देशे पतति ततोऽर्वागिति पञ्चमीनिर्देशाद्गम्यते ॥ ६ ॥

ग्रामेणाऽध्यवसिते क्षेत्रेण वा नाऽनध्यायः ॥ ७ ॥

यदा श्मशानं ग्रामतया क्षेत्रतया वा अध्यवसितं स्वीकृतं भवति तदा अध्येतव्यमेव ॥ ७ ॥

ज्ञायमाने तु तस्मिन्नेव देशे नाऽधीयीत ॥ ८ ॥

यदा तु तदध्यवसितमपि श्मशानं ज्ञायते–अयं स प्रदेश इति, तदा तावत्येव प्रदेशे नाऽधीयीत । न शम्याप्रासात् ॥ ८ ॥

(१) श्मशानवच्छूद्रपतितौ ॥ ९ ॥

शूद्रापतितसकाशेऽपि शम्याप्रासान्नाऽध्येयम् ॥ ९ ॥

समानागार इत्येके ॥ १० ॥

एके मन्यन्ते समानागारे शूद्रपतितौ वर्ज्यौ, न शम्याप्रासादिति ॥१०॥

शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवाऽनध्यायः ॥ ११ ॥

शूद्रायां तु यदा परस्परं प्रेक्षणं भवति तदैवाऽनध्यायः । न समानागारे, नापि शम्याप्रासादिति ॥ ११ ॥

तथाऽन्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥१२॥

शूद्राव्यतिरिक्ताऽपि या स्त्री मैथुने वर्णव्यतिक्रान्ता नीचगामिनी तस्यामपि प्रेक्षणप्रतिप्रेक्षणयोरनध्यायः ॥ १२ ॥

ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन् सम्भा-

१. याज्ञवल्क्योऽत्र १. १४८. द्रष्टव्यः ।

षितुं ब्राह्मणेन सम्भाष्य तया सम्भाषेत ।
सम्भाष्य तु ब्राह्मणेनैव सम्भाष्याऽधीयीत ।
एवं तस्याः प्रजानिःश्रेयसम् ॥१३॥

यो वेदमध्येष्यमाणो मलवद्वाससा रजस्वलया सह सम्भाषितुमिच्छति स पूर्वं ब्राह्मणेन सम्भाष्य पश्चात्तया सम्भाषेत । सम्भाष्य च पुनरपि ब्राह्मणेनैव सम्भाष्याऽधीयीत । किमेवं सति भवति ? एवं तस्या मलवद्वाससं आगामिनी या प्रजा तस्या निःश्रेयसमभ्युदयो भवति । प्रजारूपं वा निःश्रेयसं तस्या भवति । 'प्रजानिःश्रेयस'मितिवचनात् विधवादिभिः सह सम्भाषणे नैतत्कर्तव्यम् ॥ १३ ॥

(१) अन्तश्शवम् ॥ १४ ॥

अन्तश्शवो यत्र ग्रामे तत्र नाध्येयम् । एतेना 'न्तश्चाण्डाल'मिति व्याख्यातम् ॥ १४ ॥

अन्तश्चाण्डालम् ॥ १५ ॥

चण्डाल एव चाण्डालः । उभयत्र प्रथमा सप्तम्यर्थे । अव्ययीभावो वा विभक्त्यर्थे द्रष्टव्यः ॥ १५ ॥

(२)अभिनिस्सृतानां तु सीम्न्यनध्यायः ॥ १६ ॥

यदा शवाः सीम्नि अभिनिस्सृता भवन्ति तदा तत्राऽनध्यायः ॥ १६ ॥

सन्दर्शने चाऽरण्ये ॥ १७ ॥

अरण्ये च यावति प्रदेशे शवश्चण्डालो वा सन्दृश्यते तावत्यनध्यायः ॥ १७ ॥

तदहरागतेषु च ग्रामं बाह्येषु ॥ १८ ॥

बाह्याः उग्रनिषादादयः परिपन्थिनः तेषु च ग्राममागतेषु तदहरनध्यायः, तस्मिन्नहनि नाऽध्येतव्यम् ॥ १८ ॥

अपि सत्सु ॥ १९ ॥

ये विद्याचारित्रादिभिर्महान्तः सन्तः तेष्वपि ग्राममागतेषु तदहरनध्यायः ॥ १९ ॥

---

१. मनु. ४. १०८ दत्र द्रष्टव्यः । २. अभिनिर्हृतानां इति. ख. पु.

सन्धावनुस्तनिते रात्रिम् ॥ २० ॥

सन्धिः सन्ध्या तस्मिन् सन्धौ । अनुस्तनिते मेघगर्जिते सति रात्रि (१)सर्वां रात्रिं नाऽधीयीत । वर्षतांविदम् । अन्यस्मिन्नाधिकं वक्ष्यति ॥२०॥

स्वप्नपर्यान्तं विद्युति ॥ २१ ॥

अन्त्यो दीर्घ उपान्त्यो ह्रस्वः । विपर्यासश्छान्दसोऽपपाठो वा । सन्धौ विद्युति सत्यां स्वप्नपर्यन्तां रात्रिमनध्यायः न सर्वाम् । स्वप्नपर्यन्ता रात्रिः प्रहरावशिष्टा ॥ २१ ॥

एवं सायं सन्ध्यायामुक्तं, प्रातस्सन्ध्यायामाह—

उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायः ॥ २२ ॥

उपव्युषं उषस्समीपे तत्र विद्योतमाने विद्युति सत्यामपरेद्युस्सप्रदोषमहरनध्यायः । प्रदोषादूर्ध्वं रात्रावध्ययनम् । यावता वा कालेन शम्याप्रासादर्वागवस्थितां गां कृष्णामिति वा रोहिणीमिति वा विजानीयात् । एतस्मिन्काले उपव्युषं विद्यातमान इत्यन्वयः । रोहिणी गौरवर्णा । इतिशब्दप्रयोगे द्वितीया प्रयुज्यते । तत्राऽन्वयप्रकाराश्चिन्त्यः ॥ २२ ॥

दहेऽपररात्रे स्तनयित्नुना ॥ २३ ॥

रात्रेस्तृतीयो भागः सर्वोऽपररात्रः । तस्य त्रेधा विभक्तस्याद्योऽशो महारात्रः । अन्त्यो दहः । तस्मिन् दहेऽपररात्रे स्तनयित्नुना निमित्तेन सप्रदोषमहरनध्यायः ॥ २३ ॥

ऊर्ध्वमर्धरात्रादित्येके ॥ २४ ॥

अर्धरात्रादूर्ध्वमनन्तरोक्तो विधिरित्येके मन्यन्ते । स्वपक्षस्तु दह एवेति ॥ २४ ॥

गवां चाऽवरोधे ॥ २५ ॥

दस्युप्रभृतिभिरवरुद्धासु गोषु तावन्तं कालमनध्यायः । अवरोधो ग्रामान्निर्गमनिरोधः ॥ २५ ॥

वध्यानां च यावता हन्यन्ते ॥ २६ ॥

१. अस्य सूत्रत्वेन परिगणनं कृतं क. पु.

वर्धाहाणांचो रादीनामवरोधे यावता कालेन हन्यन्ते तावन्तं कालमनध्यायः ॥ २६ ॥

**पृष्ठारूढः पशूनां नाऽधीयीत ॥ २७ ॥**

हस्त्यश्वादीनां पशूनां पृष्ठाऽरूढः तत्राऽऽसीनस्सन्नाऽधीयीत ॥२७॥

**अहोरात्रावमावास्यासु ॥ २८ ॥**

अमावास्यासु द्वावहोरात्रौ नाऽधीयीत । तासु च पूर्वेद्युश्चतुर्दशीषु च । तथा च मनुः(१)—'अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च ।' इति ॥ २८ ॥

इत्यापस्तम्बसूत्रवृत्तावुज्ज्वलायां नवमी कण्डिका ॥

---

**चातुर्मासीषु च ॥ १ ॥**

चतुर्षु मासेषु भवाश्चातुर्मास्यः।संज्ञैषा तिसृणां पौर्णमासीनां यासु चातुर्मास्यानि क्रियन्ते। काः पुनस्ताः?फाल्गुन्याषाढीकार्तिक्यः। चातुर्मास्यो यज्ञः। 'तत्र भव'इति वर्तमाने 'संज्ञायामणि' त्यण्प्रत्ययः । तासु चातुर्मासीषु पूर्ववद्द्वावहोरात्रावनध्यायः । गौतमस्तु स्वशब्देनाह(२) 'कार्तिकी फाल्गुन्याषाढी पौर्णमासी' ति । (३)पौर्णमास्यनन्तरप्रतिपत्सु च शास्त्रान्तरवशादनध्यायः । यथा होशनाः—'पर्वणीतिहासवर्जितानां विद्यानामनध्याय' इति । 'प्रतिपत्सु न चिन्तये' दिति च । एवं चतुर्दशीमात्रस्य वर्जने शास्त्रान्तरं(४) मूलं मृग्यम् । तत्र याज्ञवल्क्यः—
(५)'पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।' इति ॥ १ ॥

**वैरमणे गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः ॥ २ ॥**

विरमणमुत्सर्जनं तदेव वैरमणम् । तस्मिन् वैरमणे । प्रथमान्तपाठे सप्तम्यर्थे प्रथमा । गुरुषु श्वशुरादिषु । संस्थितेष्विति प्रकरणाद्गम्यते ।

---

१. मनु. स्मृ. ४. ११३.
२. गौ. ध. १६. ३२. ३. पौर्णमास्यन्तरे प्रतिपत्सु च इति. ख. पु.
४. मूलम्' इति. नास्ति क. पुस्तके । मृग्यमिति नास्ति ख. पुस्तके
५. या. स्मृ. १. १४६. ऋतुसन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च इत्यधिकः पाठः ख. . पुस्तके ।

अष्टकैवाऽष्टाक्यं स्वार्थिकः ष्यञ् । आदौ प्राप्ता वृद्धिर्मध्ये कृता । उपाकरणमेवौपाकरणम् । एतेषु निमित्तेषु त्र्यहा अध्ययनराहिताः । तत्र गुरुमरणदिनमारभ्य त्र्यहाः । इतरेषु पूर्वेद्युरपरेद्युस्तास्मिंश्च दिने नाधीयीत। अत्र गौतमः—(१)तिस्रोऽष्टकास्त्रिरात्रमन्त्यामेकेऽभितो वार्षिक'मिति। उपाकरणादूर्ध्वं प्रागुत्सर्जनात् यदध्ययनं तद्वार्षिकम् । तदभितस्तस्यादावन्ते च यत्कर्म क्रियते तत्रापि त्रिरात्रमित्यर्थः । औशनसे च त्र्यक्तमुक्तम्(२)'उपाकर्मणि चोत्सर्गे त्र्यहमनध्याय' इति । मानवे च त्र्यक्तम्(३)'उपाकर्माणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ।' इति ॥ २ ॥

## तथा सम्बन्धेषु ज्ञातिषु ॥ ३ ॥

ये सन्निकृष्टा ज्ञातयः भ्रातृतत्पुत्रपितृव्यादयः । तेष्वपि मृतेषु तथा त्र्यहमनध्यायः । ब्रह्मचारिणो ऽयं विधिरयम् । आशौचवतां तु यावदाशौचमनध्यायः शास्त्रान्तरसिद्धः—

'उभयत्र दशाऽहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्तते ॥' इति ।

उभयत्र जनने मरणे च ॥ ३ ॥

## मातरि पितर्याचार्य इति द्वादशाहाः ॥ ४ ॥

मात्रादिषु मृतेषु द्वादशाहमनध्यायः । अयं विधिर्गृहस्थानामपि । केचिदाशौचमपि तावन्तं कालमिच्छन्ति । नेति वयम्, अनध्यायप्रकरणात् ॥ ४ ॥

## तेषु चोदकोपस्पर्शनं तावन्तं कालम् ॥ ५ ॥

मात्रादिष्वधिकं तावन्तं कालमहरहस्स्नानमपि कार्यम , न केवलमनध्यायः ॥ ५ ॥

## अनुभाविनां च परिवापनम् ॥ ६ ॥

अनु पश्चात् भूता जाता अनुभाविनः मृतापेक्षयाऽवरवयसः । तेषां परिवापनमपि भवति केशानाम् । (५)'कृत्यच' इति प्राप्तस्य णत्वस्य (६)'णे-

---

१. गौ. १६. ३८–४०.

२. नेदं वचनमिदानीमुपलभ्यमानायां पद्यात्मिकामौशनसस्मृतौ दृश्यते ।

३. मनु. ४. ११९. ४. मनु. ५. ३.

५. "शिखामनु प्रवपन्त ऋध्यै" इति वचनम् ! तस्य बलीयस्त्वादित्याह"इति.ख. पु.

६. पा. सू. ८. ४. २२. उपसर्गस्थान्निमित्ततः ( रेफषकाराभ्यां ) परस्याऽच उत्तरस्य कृत्प्रत्ययगतस्य नकारस्य णत्वं स्यादिति सूत्रार्थः ॥

(१)र्विभाषे' ति विकल्पः । अन्ये तु शावं दुःखमनुभवतां सर्वेषां परिवापनमिच्छन्ति ।

अपर आह—अनुभाविन उदकार्हाः । तेषां मरणे परिवापनमिति ॥ ६ ॥

**न समावृत्ता वपेरन्नन्यत्र विहारादित्येके ॥ ७ ॥**

विहारो यागदीक्षा । ततोऽन्यत्र न समावृत्ता वपेरन्नित्येके मन्यते । स्वमतं तु वपेरन्नेवेति ॥ ७ ॥

तत्र वपनस्याऽमङ्गलत्वं गुणविधिना परिहारं च वक्तुं ब्राह्मणमुदाहरति—

**अथापि ब्राह्मणम्—रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥ ८ ॥**

रिक्तः अन्तःशून्यो घटादिः । सोऽनपिहितः पिधानरहितो यादृशः तादृश एषः यन्मुण्डो नाम । तस्य रिक्तस्यापिधानमेतत् यच्छिखा नाम । अनेन चैतद्दर्शितं-निषेधशास्त्रं सह शिखया वपनप्रतिषेधपरमिति ॥ ८ ॥

कथं तर्हि सत्रेषु शिखाया वपनम्? (२)वचनसामर्थ्यादित्याह—

**सत्रेषु तु वचनाद्वपनं शिखायाः ॥ ९ ॥**

स्पष्टम् ॥ ९ ॥

**आचार्ये त्रीनहोरात्रानित्येके ॥ १० ॥**

आचार्ये संस्थिते त्रीनहोरात्रानध्ययनं वर्जयेदित्येके मन्यते । स्वपक्षस्तु द्वादशाहः पूर्वमुक्तः ॥ १० ॥

**श्रोत्रियसंस्थाया(३)मपरिसंवत्सरायामेकाम् ॥ ११ ॥**

श्रोत्रियं (४)वक्ष्यति । तस्य संस्थायामपरिपूर्णसंवत्सरायां श्रुतायामेकां रात्रिमेकमहोरात्रमध्ययनं वर्जयेत् । अत्र संस्थाश्रवणाद्गुर्वादिष्वपि सैव

---

१. पा. सू. ८. ४. ३. उपसर्गस्थान्निमित्तात्परस्य, णिजन्ताद्विहितो यः कृत्प्रत्ययः तद्गतस्य नकारस्य णत्वं विकल्पेन स्यात् इति सूत्रार्थः । २. ५६. पृष्ठे ५. टिप्पणी द्रष्टव्या ।
३. उपरि संवत्सरायां इति क. पुस्तकेऽपपाठः । ४. आप. ध. २. ६. ४. सूत्रे ।

निमित्तमनध्यायस्य ॥ ११ ॥

सब्रह्मचारिणीत्येके ॥ १२ ॥

एके तु सब्रह्मचारिणो मरण एवाऽनन्तरोक्तमनध्यायमिच्छन्ति, न तु श्रोत्रियसामान्यमरणे ॥ १२ ॥

श्रोत्रियाभ्यागमेऽधिजिगांसमानोऽधीयानो वाऽनुज्ञाप्याधीयीत ॥ १३ ॥

श्रोत्रियेऽभ्यागते अध्येतुकामोऽधीयानश्च तमनुज्ञाप्याधीयीत ॥ १३ ॥

अध्यापयेद्वा ॥ १४ ॥

अध्यापयितुकामोऽध्यापयन्वेति प्रकरणाद्गम्यते । सोऽपि तमनुज्ञाप्याध्यापयेदिति ॥ १४ ॥

गुरुसन्निधौ "चाधीहि भो" इत्युक्त्वाऽधीयीत ॥ १५ ॥

धारणाध्ययनं पारायणाध्ययनं वा कुर्वन् गुरौ सन्निहिते सति 'अधीहि भो' इत्युक्त्वाऽधीयीत ॥ १५ ॥ *

अध्यापयेद्वा ॥ १६ ॥

अध्यापयन्नपि तत्सन्निधावेवमेवोक्त्वाऽध्यापयेत् ॥ १६ ॥ *

उभयत उपसंग्रहणमधिजिगांसमानस्याधीत्य च ॥ १७ ॥

उभयतः अध्ययनस्याऽऽदावन्ते च उपसंग्रहणं कर्तव्यं यथाक्रम(१)मध्येतुकामस्याऽऽदावधीत्यान्ते ॥ १७ ॥ *

अधीयानेषु वा यत्राऽन्यो व्यवेयादेतमेव शब्दमुत्सृज्याऽधीयीत ॥ १८ ॥

बहुवचनमतन्त्रम् । अधीयानेषु च यत्राऽन्यो व्यवेयादन्तरा गच्छेत्, तत्रा 'ऽधीहि भो' इत्येतमेव शब्दमुत्सृज्य उच्चार्याऽधीयीत । प्रत्येकमुपदेशादेकवचनम् । अधीयीरन् ॥ १८ ॥

श्वगर्दभनादास्सलावृक्येकसृकोलूकशब्दास्सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च ॥ १९ ॥

शुनां गर्दभानां च बहूनां नादः । बहुवचननिर्देशात् । सलावृकी

१. अध्येतुकामस्येत्यादि ङ पुस्तक एवास्ति । * मनौ. २. ७३ श्लोको द्रष्टव्यः ।

वृकजाताववान्तरभेदः । क्रोष्ट्रीत्यन्ये । लिङ्गस्याविवक्षितत्वात्पुंसोऽपि ग्रहणम् । (१)'इन्द्रो यतीन् सालावृकेभ्य' इत्यादौ दर्शनात् । सर्वत्रादिस्वरो दीर्घः । स एवायं विकृतः प्रयुक्तः । एकसृकः एकचरः सृगालः । उलूको दिवाभीतः । एतेषां च शब्दाः । वादितानि वादित्राणि वीणावेणुमृदङ्गादीनि । तेषां च सर्वे शब्दाः । रोदनशब्दादयश्च । एते श्रूयमाणा (२)अनध्यायस्य हेतवः ॥ १९ ॥

**शाखान्तरे च साम्नामनध्यायः ॥ २० ॥**

वेदान्तरसकाशे(३)साम्नामनध्ययनम् । गीतिषु सामाख्या, तद्योगाद्द्विवचन इत्यन्ये ॥ २० ॥

**सर्वेषु च शब्दकर्मसु यत्र संसृज्येरन् ॥ २१ ॥**

आक्रोश(४)परिवादादिषु सर्वेषु शब्दकर्मसु अनध्यायः । यत्राध्ययनशब्देन ते संसृज्येरन् ॥ २१ ॥

**छर्दयित्वा स्वप्नान्तम् ॥ २२ ॥**

छर्दनं वमनम् । तत्कृत्वा स्वप्नान्तं यावन्नाऽधीयीत ॥ २२ ॥

**सर्पिर्वा प्राश्य ॥ २३ ॥**

अथ वा सर्पिः प्राश्याऽधीयीत ॥ २३ ॥

**पूतिगन्धः ॥ २४ ॥**

दुर्गन्ध उपलभ्यमानोऽनध्यायहेतुः ॥ २४ ॥

**शुक्तञ्चाऽऽत्मसंयुक्तम् ॥ २५ ॥**

यत्पक्वं कालपाकेनाऽम्लं जातं तच्छुक्तम् । तद्यावदात्मसंयुक्तं स्वोदरस्थमजीर्णं, यावत्तदनुगुण उद्गारस्तावदनध्यायहेतुः ॥ २५ ॥

**प्रदोषे च भुक्त्वा नाऽधीयीत ॥ २६ ॥**

तेनाऽधीत्यैव भुञ्जीत ॥ २६ ॥

**प्रोदकयोश्च पाण्योः ॥ २७ ॥**

भुक्त्वेत्येव । भुक्त्वा यावत्प्रोदकौ पाणी आर्द्रौ तावन्नाऽधीयीत । केचित् भुक्त्वेति नानुवर्तयन्ति ॥ २७ ॥

---

१. तै. सं. ६. २. ७. २ या. स्मृतौ १. १४८–१५१. श्लोका द्रष्टव्याः ।
३. साम नाऽध्येयम् । इति. ख. पु. ४. परिहासादिषु. इति. क. पु.

प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ॥ २८ ॥

यो मृतोऽसपिण्डीकृतस्स प्रेतः। तदुद्देशेन दत्तमन्नं भुक्त्वा सप्रदोषमहर्नाऽधीयीत। प्रदोषादूर्ध्वं न दोषः। अत्र मनुः—

(१)यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति।
विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत्॥' इति ॥ २८ ॥

आ च विपाकात् ॥ २९ ॥

यदि तावता कालेन तदन्नं पक्वं जीर्णं न भवति, तत आविपाकात् तस्य नाऽधीयीत ॥ २९ ॥

अश्राद्धेन तु पर्यवदध्यात् ॥ ३० ॥

जीर्णे अजीर्णे च तस्मिन् अश्राद्धेनाऽन्नेन पर्यवदध्यात् तस्योपर्यश्राद्धमन्नं भुञ्जीतेत्युक्तं भवति। केचित् अत्र 'अश्राद्धेने' ति वचनात् पूर्वत्रापि प्रेतान्नमिति श्राद्धमात्रं विवक्षितं मन्यन्ते ॥ ३० ॥

॥ इत्यापस्तम्बधर्मसूत्रे तद्वृत्तावुज्ज्वलायां च दशमी कण्डिका ॥

---

काण्डोपाकरणे चाऽमातृकस्य ॥ १ ॥

काण्डोपाकरणं काण्डव्रतादेशनम्। तस्मिन्नहनि अमातृकस्यान्नं भुक्त्वा सप्रदोषमहरनध्यायः। अपर आह—भुक्त्वेति नाऽनुवर्तते। यथाचोत्तरत्र भुक्त्वाग्रहणम्। काण्डोपाकरणे अमातृकस्य माणवकस्य सप्रदोषमहरनध्यायः। एतेनोत्तरं व्याख्यातम् ॥ १ ॥

काण्डसमापने चाऽपितृकस्य ॥२॥

काण्डसमापनं व्रतविसर्गः ॥ २ ॥

मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके ॥ ३ ॥

ये मनुष्या भूत्वा प्रकृष्टेन तपसा देवास्सम्पन्नास्ते मनुष्यप्रकृतयो (२)नन्दिकुबेरादयः। तेषां यज्ञः तत्प्रीत्यर्थं ब्राह्मणभोजनम्, तत्र भुक्त्वा

---

१. मनु. स्मृ. ४. १११.  २. 'नन्दीश्वरशरकुमारादयः' इति पाठान्तरम्।

